# ĀPASTAMBA SMĀRTA PRAYOGA

*By*

**VENJARLA SINGAYA BHATTA**

*Edited by :*

V. SUNDARA SARMA

&

S. SUNDARESA SOMAYAJI
*T. M. S. S. M. Library,*
THANJAVUR

*Published by :*

O. A NARAYANASWAMI, B. A., B. L.,
*Honorary Secretary,*

FOR THE ADMINISTRATIVE COMMITTEE OF THE
TANJORE MAHARAJA SERFOJI'S SARASVATI MAHAL LIBRARY, THANJAVUR.

A. D. 1964 Śaka 1885.

Price Rs. 1-50

# भूमिका

अनादेः कालात् बहुधा वर्धमानो वैदिकसंप्रदायः भारतेऽस्मिन् सर्वैराद्रियमाणस्सर्वेषामपि जनिमतामैहिकामुष्मिकसत्फलैकनिदानं विद्वज्जनसमुदायैकवेद्यस्सन् सर्वेषामादरपात्रं विराजतेऽद्यापि । कर्मभूमित्वेन प्रथितेऽस्मिन् भरतखण्डे कर्मानुष्ठानस्य कियत्प्राधान्यं समस्तीति न पृथङ्निर्देशमपेक्षते । अस्मदीयस्य देशस्य कर्मभूमित्वप्रथा तस्य वैदिकसंप्रदायस्यानादिसिद्धतां तस्यावश्यादरणीयतां च सम्यक् व्याकरोति । "निराश्रमी न तिष्ठेत दिनमेकमपि द्विजः" इति बोधयन्ती दक्षसंहिता चास्मानाश्रमाश्रयान् करोति ।

आश्रमाश्रयणे च तत्तदाश्रमोचितकर्मणां स्वनुष्ठानेनैव सार्थक्यं संपादनीयं भवति तत्तदाश्रमस्य । अन्यथा धर्मलोप एव । भारतनिवासिनां सनातनसंप्रदायैकशरणानामस्माकं श्रुतिस्मृतिवृद्धसंप्रदायान् विना न किञ्चिदस्ति मार्गदर्शकं कर्मानुष्ठानस्य । अतो जनिमतामस्माकं जन्मसाफल्यसिद्ध्यै निराक्षेपमवश्यानुष्ठेयानां कर्मणां ज्ञानायोपयुक्ताः श्रुतिस्मृतिवृद्धसम्प्रदायादयः नित्यपूज्या इत्यत्र नास्ति सन्देहः । तान् सम्यक् समालोच्य विभिन्नवर्गीयाणां कर्मानुष्ठानसौकर्याय सूत्रादिकान् विरचय्य आपस्तम्बाश्वलायनादयो बहवो महर्षयः वैदिकसंप्रदायस्य जीवातुभूता महदुपकुर्वन्ति स्म ।

तैश्च दीर्घदर्शिभिर्महर्षिभिर्विरचितानि श्रौतस्मार्तसूत्राणि तदितराणि च विपुलव्याख्यासापेक्षाणि सामान्यजनदुरूहाणि क्वचिदतिजटिलानि च दृश्यन्त इत्येतद्विज्ञजनविदितमेव । कर्मानुष्ठानप्रयोगमधिकृत्य संयग्ज्ञानविरहः क्रमेण सर्वात्मना कर्मपरित्यागस्य मार्गमेव दर्शयेत् । अतस्तादृशदुःस्थितिपरिहारपूर्वकं सानातनिकधर्मव्यवस्थापनं मनसिकृत्य श्रुतिस्मृतिसूत्रादिकान् सत्संप्रदायांश्च संयक् परिशील्य पण्डिताः वैदिकसंप्रदायप्रमाणभूताः केचित् कर्मसु मन्त्रप्रयोगतन्त्रप्रधानान् प्रयोगग्रन्थान् रचयन्ति स्म । तादृशप्रयोगग्रन्थेषु बहुष्वन्यतमोऽयं ग्रन्थः "आपस्तम्बस्मार्तप्रयोगः" वेङ्गलशिङ्गयभट्टप्रणीतः आपस्तंबीयसूत्रावलम्बिनामान्ध्राणां प्रयोगजातं व्याकरोति ।

तदेतद्ग्रन्थकर्तुर्वेङ्गलशिङ्गयभट्टस्य देशकालादिनिर्णये कृतः प्रयत्नस्सर्वोपि विफलस्सञ्जातः । आपाततः तस्य नामधेयपरिशीलनेनेदं ज्ञायतेऽयमान्ध्रप्रदेशज इति । अनेन प्रणीता बहवो ग्रन्थाः प्रयोगविषया अन्येऽप्युपलभ्यन्ते मुद्रिताः । अयमेकः परममुद्रित आसीत् । ग्रन्थस्यास्य ताळपत्रात्मिका मातृका त्वेतद्ग्रन्थालयस्थानां विद्वद्वरेण्यानां श्रीमतां सुन्दरेश्वरसोमयाजिनां पितृव्यैः कीर्तिशेषैः श्रीमद्भिः चन्द्रशेखरशास्त्रिवर्यैस्स्वहस्तलिखिता ग्रन्थ-

लिप्यङ्किता रक्षिता चाऽभूत् । वंशपरंपरागतताया मातृकायास्तस्याः पुत्रिका च [1] ग्रन्थालयेऽस्मिन् विद्यमाना ( Copied Volume ) 1062 संख्याता मुद्रणस्यास्य मूलम् ।

श्रौतस्मार्तविहितनित्यनैमित्तिक कर्मानुष्ठानद्वारा जन्मसाफल्यलिप्सूनामस्माकमेतादृश-ग्रन्थजातमतिमात्रमुपकरोतीति नाऽतिवचनम् । सत्कर्मणां व्यवस्थीकरणं दुष्कर्मणां निरा-करणं च श्रुतेस्तथा स्मृतेरेव सुष्ठु ज्ञायते । श्रुतितत्त्वार्थविदां नैकस्मृतिप्रवर्तकानां महर्षीणां प्रज्ञानुभववशादुत्पन्नोऽयं वैदिकसंप्रदायः न कदापि फलप्रदाने वैपरीत्यं भजेत् । "एकः शब्दस्सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुक् भवती"ति वैयाकरणाः प्रवदन्ति । तथैव एकं कर्म स्वनुष्ठितं स्वर्गे लोके कामधुग्भवेदित्यत्र नास्ति सन्देहलेशस्याप्यवकाशः । शब्दप्रयोगस्यैव स्वर्गे लोके कामधुक्त्वरूपं फलं यदि स्यात्, तर्हि कर्मणस्ततोऽप्यधिकमेव फलं वक्तुमुचितं स्फुरति । आश्रमाश्रयाणामस्माकं तत्तदाश्रमोचितान्यवश्यमनुष्ठेयानि कर्माणि नित्यनैमित्तिकानि श्रुतिस्मृतिचोदितानि वर्तन्ते । तत्तादृक्कर्मानुष्ठानतत्परस्य जनिमतः कर्मविषयकपरिज्ञानस्या-ऽऽवश्यकत्वात् श्रौतग्रन्थपठनादिकमवश्यकर्तव्यतामेति । तेनाध्ययनं नित्यसिद्धं भवति । अधीतानां च वेदादीनां अध्यापनादिनिर्वहणे एव सार्थकता सिद्ध्यत्यध्ययनस्येति सिद्धं तात्त्विककर्मिणः पुरुषस्य मुक्तिः ऋणत्रयात् । ऋणत्रयविमुक्तस्य च ज्ञानवैराग्यसंपन्नस्य पारमार्थिकचिन्तापरस्य सिद्धा नित्यनिरतिशयानन्दपरब्रह्मतादात्म्यरूपा मुक्तिरित्यलं विस्तरेण ।

मुद्रणावसरोद्भूतानि प्रामादिकानि शुद्धिपत्रे शोधितानि वर्तन्ते । यद्यन्यान्यपि भवेयुस्तानि पण्डितप्रवरैरावेदनीयानि प्रार्थ्यन्ते समनन्तरमुद्रणावसरे शोधनाय । परिमित्या स्वल्पोऽप्ययं ग्रन्थः पण्डितप्रकाण्डानामादरपात्रं भवेदित्याशास्यते ॥

इति शम्

तञ्जापुरी,<br>शोभकृत्कार्तिक-शुक्ल-चतुर्दशी,<br>29—11—1963.

वि. सुन्दरशर्मा<br>यस्. सुन्दरेशसोमयाजी

1. The Thanjavur Maharaja Serfoji's Sarasvati Mahal Library, Thanjavur.

महागणपतये नमः

# आपस्तम्बस्मार्तप्रयोगः

स्मार्तप्रयोगग्रन्थोयं षष्टिखण्डैस्समन्वितः ।
याजुषान्ध्रोपकृतये प्राग्ग्रन्थेभ्यः समुद्धृतः ॥

अथ गार्ह्याणि कर्माण्युदगयनपूर्वपक्षाहःपुण्याहेषु कार्याणि । यज्ञोपवीती प्रदक्षिणं दक्षिणाग्राचारं कुर्यात् । पुरस्तादुदग्वोपक्रमापवर्गौ । पित्र्याण्यपरपक्षे प्राचीनावीती प्रसव्यं दक्षिणतोपवर्गौ । निमित्तानन्तरं नैमित्तिकानि । नामान्नचौळोपनयनगोदानविवाहस्नानसीमन्तपुंसवनेषु पूर्वेद्युर्नान्दीमुखं कुर्यात् । जातकर्मणि सद्यः । प्रथमपाणिग्रहणजातकर्मचौळोपनयनस्नानोपाकर्मतिलहोमनक्षत्रशांतिषु काम्यव्रतानि, कन्याविधुरब्रह्मचारीविधवापापनुत्थानन्दैकाहवैश्वदेववृषोत्सर्जनान्येतानि कर्माणि लौकिकाग्नौ कुर्यात् । जातनामान्नचौळानि स्त्रियापि तूष्णीम् । इध्मवत्सु कर्मसु संकल्पानन्तरमिध्माबर्हिषोत्सन्नहनं समिदेकप्रादेशा द्विप्रादेश इध्मस्त्रिप्रादेशः परिधिः स्थालीपाकवर्जं विवाहोपनयनसमावर्तनसीमन्तचौळगोदानप्रायश्चित्तेषु शम्याः परिध्यर्थे होमे सर्वत्रोभयतः परिषेचनं — अदितेऽनुमन्यस्वेति दक्षिणतः प्राचीनमनुमतेऽनुमन्यस्वेति पश्चादुदीचीनं सरस्वतेऽनुमन्यस्वेत्युत्तरतः प्राचीनं देवसवितः प्रसुवेति समन्तमुत्तरपरिषेचनेऽन्वमंस्थाः प्रासावीरिति मन्त्रसन्नामः; पैतृकेषु समन्तमेव तूष्णीम् ॥

यत्राग्निः स्थाप्यते तत्र प्रादेशमात्रं चतुरश्रं तण्डुलचूर्णेन स्थण्डिलं कल्पयित्वा प्राचीरुदक्संस्था उदीचीः प्राक्संस्थास्तिस्रस्तिस्रो रेखा लिखित्वाऽद्भिरवोक्ष्य शेषमुत्सृज्य भूर्भुवस्सुवरोमित्यग्निं प्रतिष्ठाप्योत्तरेण पूर्वेणान्यत्तोयमुपदध्यादेतद्धार्ये न विद्यते । अग्निमिध्वाग्नेर्ध्यानमलङ्कृत्य दक्षिणोत्तरैरुत्तराधरैः प्रागुदगग्रैर्दर्भैरग्निं परिस्तृणाति; दक्षिणाप्रागग्रैः पित्र्येषु । उत्तरेणाग्निं प्रागग्रान्दर्भान् संस्तीर्य द्वन्द्वन्यंचि पात्राणि प्रयुनक्ति; दर्व्याज्यस्थाल्यौ प्रोक्षणीपूर्णपात्रे इध्मस्रुवाविति समौ साग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कृत्वाद्भिरनुमृज्य प्रोक्षणपात्रे निधाय प्रोक्ष्यापरेणाग्निं पवित्रान्तर्हिते पात्रे अप आनीय हस्तयोरङ्गुष्ठोपकनिष्ठिकाभ्यां उदगग्रे गृहीत्वा प्राचीस्त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा इध्मं च विस्रस्य त्रिः प्रोक्ष्य प्रोक्षणपात्रं दक्षिणतो निधाय पूर्णपात्रमादाय पूर्ववत्कृत्वा मुखसममुद्धृत्य उत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य ब्राह्मणं दक्षिणतो दर्भेषु निषाद्याज्यं विलाप्यापरेणाग्निं पवित्रान्तर्हितायां आज्यस्थाल्यामाज्यं निरूप्य उदीचोऽङ्गारान्निरुह्य तेष्वाज्यमधिश्रित्य ज्वलतावद्युत्य द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाळ्य प्रत्यस्य त्रिः पर्यग्निकृत्वा उदगुद्वास्याङ्गारान्प्रत्यूह्य उदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं त्रिरुत्पूय पवित्रग्रन्थिं विस्रस्याप उपस्पृश्य प्रागग्रमग्नौ प्रहरति ॥

स्रुक्स्रुवावग्नौ प्रतितप्य दर्भाग्रैस्सम्मार्ष्टि । स्रुवमग्रैरन्तरतोऽभ्यागारं सर्वतोबिलमभिसमाहारं मूलैर्दण्डं जुहूमग्रैरन्तरतोऽभ्यागारं प्राचीं मध्ये बाह्यतः प्रतीचीं मूलैर्दण्डं पुनः प्रतितप्य प्रोक्ष्य निधाय दर्भानद्भिः सꣳस्पृश्याग्नौ प्रहरति । इध्ममादाय परिधीन्परिदधाति स्थविष्ठं पश्चाद्दक्षिणतोणीयाꣳसं दीर्घमणिष्ठं ह्रस्वमुत्तरत उदगग्रं मध्यमं प्रागग्रावितरौ । मध्यमम्परिधिमुपस्पृश्य पुरस्तादूर्ध्वे आघारसमिधावादधाति । अग्निं परिषिच्य समिधमेकामवशिष्य पञ्चदशेध्मानादधाति । तूष्णीं स्रुवेणाज्यमादाय उत्तरं परिधिमन्ववहृत्य प्रजापतिं मनसा ध्यायन् दक्षिणाप्राञ्चमृजूꣳसन्ततमाघारयति । स्रुचा द्वितीयमैन्द्रमितरपरिधिसन्धिमन्ववहृत्य प्रागुदञ्चमाज्यभागौ जुहोति । अग्नये स्वाहेत्युत्तरपूर्वदेशे ; सोमाय स्वाहेति दक्षिणपूर्वदेशे ; समं पूर्व्येण यथोपदेशं प्रधानाहूतीर्हुत्वाग्नये रुद्राय तन्तिचरायेति समिधमिध्मसन्नहनं चाग्नौ प्रहृत्य स्रुवेण जयाभ्याताना राष्ट्रभृतः प्राजापत्यां व्याहृतीर्विहृतास्सौविष्टकृतीमित्युपजुहोति ; यदस्य कर्मण इत्यनाज्ञातादिप्रायश्चित्तानि जुहुयात् । ततः परिषिच्य प्रणीतास्वप आनीय प्रतिदिशं व्युत्सिच्य शिरसि मार्जयित्वा समुद्रं व इति पत्न्या अञ्जलौ शेषं निनीय ब्रह्माणं विसृजेत् ॥

गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।
नामान्नप्राशने चौळं मौञ्जी व्रतचतुष्टयम् ।
गोदानाख्यं स्नातकं च विवाहः पैतृमेधिकम् ॥

एतानि षोडशकर्माणि ; इतोतिरिक्तानि वैश्वदेवश्रावणहोमाग्रयणाग्निद्वयसंसर्गाः तत्र तत्र प्रायश्चित्तानि च वक्ष्यन्ते ॥

## अथ सीमन्तोन्नयनम्

सीमन्तोन्नयनं प्रथमगर्भे षष्ठेऽष्टमे वा पत्न्या सीमन्तोन्नयनं करिष्य इति सङ्कल्प्य ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा रक्षाबन्धनं कृत्वाऽग्नीन्धनादिपात्रप्रयोगान्ते यवानां बन्धनं ; शललीग्लप्सपुञ्जीलांश्च प्रयुञ्ज्यात् । आज्यभागान्तेऽन्वारब्धायां धाता ददात्विति चतसृभिर्यस्त्वा हृदा कीरिणेति चतसृभिः प्रतिमन्त्रमष्टावाज्याहुतीर्हुत्वा समित्सन्नहनं जयादिब्रह्मविसर्जनान्ते अपरेणाग्निं पत्नीं प्राचीमुपवेश्य त्रीण्याशलल्यास्त्रिभिर्दर्भपुञ्जीलैश्शलालुग्लप्सेनेति व्याहृतीभी राकामहं यास्तेराक इति द्वाभ्यां सीमन्तमुन्नीय गायतमिति वीणागायिनौ संशास्ति । सोम एव न इति तौ गायेताम् । पूर्वासाल्वानामसावित्यत्र समीपनदीनिर्देशः । पत्नीकण्ठे यवान्विरूढानाबध्य वाचं यच्छत्यानक्षत्रोदयादुदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य वत्समन्वारभ्य व्याहृतीश्च जपित्वा वाचं विसृजेत् ॥ १ ॥

इति प्रथमः खण्डः ॥

## अथ पुंसवनम्

एवं पुंसवनं पात्रप्रयोगान्ते प्राच्यामुदीच्यां वा शाखायां सवर्णवटशुङ्गान् दृषत्पुत्रेण सह प्रयुंज्यात् । परिधयोत्र न शम्याः । सीमन्तवर्जयादिब्रह्मविसर्जनान्तेऽनुद्भूतरजसा कुमार्या दृषत्पुत्रेण शुङ्गान्पेषयित्वा नववस्त्रेण परिप्लाव्यापरेणाग्निं प्राचीमुत्तानां निपात्य पुंसुवनमिति यजुषाङ्गुष्ठेन दक्षिणे नासिकाछिद्रे रसं निनयति, सा तमागर्भाद्भिरति । तत आशिषो वाचयित्वा ब्राह्मणान् भोजयेत् ॥ २ ॥

इति द्वितीयः खण्डः ॥

## अथ जातकर्म

जाते कुमारेऽस्य जातकर्म करिष्य इति सङ्कल्प्य दिवस्परीत्यनुवाकेनाभिमृश्यास्मिन्नहमिति यजुषा दक्षिणाङ्क उपवेश्य अङ्गादङ्गादिति द्वाभ्यामभिमन्त्रणं मूर्धन्यवघ्राणं दक्षिणकर्णे जपं च कृत्वा नक्षत्रनाम च निर्दिशति; दर्भेण सुवर्णं निष्टर्क्य बध्वा तेन घृतयुक्तं मधु मेधां त इति भ्राजो दधात्वित्यंतेन कुमारं प्राशयित्वा क्षेत्रियै त्वेति पञ्चभिः सकृत्स्नापयित्वा व्याहृतीभिरोङ्कार-चतुर्थीभिः पृषदाज्यं कांस्येन सकृत्प्राशयित्वा संसृज्याद्भिश्शेषं गोष्ठे निनयेत् । मा ते कुमारमिति मातुरङ्क आदाय अयं कुमार इति दक्षिणं स्तनं प्रतिधाप्य यद्भूमेरिति द्वाभ्यां भूमिमुपस्पृश्य नामयतीति यजुषा तत्र सन्निविष्टं कुमारमुपस्पृश्यापस्सुप्रेष्विति शिरस्समीपे उदकुम्भं निधाय तत्राग्निं प्रतिष्ठाप्य परिस्तरणान्तं कृत्वा परिषिच्य सर्षपान्फलीकरणमिश्रान् अञ्जलिना सकृदवदायायं कलिमिति स्वाहान्तं सशेषं हुत्वा पुनः स्वाहाकारपूर्वं द्विर्जुहुयात् । एवं शण्डेरथ इति स्वाहान्तैः सप्तभिः प्रतिमन्त्रं हुत्वा गृहपालान्संशास्ति । प्रविष्टे प्रविष्ट एव तूष्णीमग्नावावपतेति तेपि तथा कुर्युरेवमहरहरयं कलिमित्यानिर्दशतायाः ॥ ३ ॥

इति तृतीयः खण्डः ॥

## अथ नामकरणम् ,

दशम्यामुत्थितायां श्वोभूते पुत्रस्य नाम धास्यावह इति सङ्कल्प्य पुत्रस्य नाम कुरुतो द्व्यक्षरं चतुरक्षरं वा नाम पूर्वमाख्यातोत्तरं वा घोषं पदाद्यन्तस्थदीर्घाभिनिष्ठान्तं समानाक्षर-मयुग्माक्षरं कुमार्या अपि यस्मिन्कस्मिन्निति उपसर्गस्यात्तद्धि प्रतिष्ठितं भवति । ब्राह्मणान्प्रवासादेत्य पुत्रस्य अङ्गादङ्गादिति द्वाभ्यामभिमन्त्रणं मूर्धन्यवघ्राणं दक्षिणकर्णेग्निरायुष्मानिति पञ्चमन्त्रान् जपेत् । कुमारीं सर्वस्मादात्मन इति यजुषाभिमन्त्रयते ॥

इति चतुर्थः खण्डः ॥

## अथ अन्नप्राशनम्

जन्मतोधि षष्ठे मासीमं कुमारं अन्नप्राशनकर्मणा संस्करिष्य इति सङ्कल्प्य ब्राह्मणान् भोजयित्वा आशिषो वाचयित्वा रक्षाबन्धनं कृत्वा दधिमधुघृतोदनानि संसृज्य भूरपामिति चतसृभिः सकृत् द्विस्तूष्णीं प्राशयेत् ॥ ५ ॥

इति पञ्चमः खण्डः ॥

## अथ चौलोपनयनविवाहाद्यङ्गं

## अङ्कुरार्पणम्

अथातोऽङ्कुरार्पणं व्याख्यास्यामो ब्राह्मणान्परितोष्य पुण्याहं वाचयित्वा अङ्कुरार्पणाख्यं कर्म करिष्य इति सङ्कल्प्य भूमिर्भूम्नेत्यनुवाकेन भूमिं सम्प्रार्थ्य उद्धृतासीति त्रिभिर्मन्त्रैर्मृदमभिमन्त्र्य मावोरिषत्खनितेति खनित्वा शन्नो देवीरित्यद्भिरवोक्ष्य स्योना पृथिवीत्याहृत्य गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कल्पयित्वाक्षतैस्संप्रकीर्य पञ्चपालिकाः सौवर्णं राजतं ताम्रं मृण्मयं वा यथासम्भवं गृहीत्वा—

### अथ श्लोकाः ॥

मध्ये चतुर्मुखं विद्यात् [1]प्राच्यां वज्रिणमेव च ।
[2]दक्षिणस्यां यमं विद्यात् प्रतीच्यां वरुणं तथा ॥

[3]उदीच्यां शशिनं विद्यात् पालिकास्थापनं क्रमात् ।
वल्मीकमृत्तिका चैव गोमयं च तथैव च ।
एतानि प्रक्षिपेत्तासु पालिकासु यथाक्रमम् ॥

दूर्वामश्वत्थपर्णं च शिरीषं बिल्वमेव च ।
तासां मध्ये तु बध्नीयाच्छ्वेतसूत्रेण वेष्टयेत् ॥

मध्यमपालिकायां प्रणवपूर्वकं व्याहृतीभिः व्यस्तसमस्ताभिः ब्रह्माणं प्रजापतिं हिरण्यगर्भं चतुर्मुखमित्यावाह्य प्राच्यामिन्द्रं वज्रिणं शतक्रतुं शचीपतिं, दक्षिणस्यां यमं वैवस्वतं पितृपतिं दण्डधरं, प्रतीच्यां वरुणं प्रचेतसं स्वरूपिणं अपाम्पतिं, उदीच्यां निशाकरं शशिनं चन्द्रं सोममित्यासनादिषोडशोपचारैरभ्यर्च्य, उत्थाय—

---

1. पूर्वे 2. दक्षिणे 3. उत्तरे ।

दिशांपतीन्नमस्यामि सर्वकामफलप्रदान्।
कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम्॥

तिलमाषव्रीहियवप्रियङ्गुचणगोधूमा इति सप्त ग्राम्या ओषधयो वेणुश्यामाका नीवारजर्तिलाश्च गवीधुका आरण्यजा मर्कटजूकाश्च सप्तारण्या इति चतुर्दशौषधिं यथासंभवं व्याहृत्य कांस्यपात्रे निधाय क्षीरेण प्रक्षाळ्य या जाता ओषधय इत्यनुवाकेनाभिमृश्य ब्रह्मजज्ञानं पिताविराजामिति मध्यमपालिकायां, यंत इन्द्र भयामहे स्वस्तिदा विशस्पतिरिति प्राच्यां, योस्य कौष्ठ्यजगत इमं यमप्रस्तरमिति दक्षिणस्यां, इमं मे वरुण तत्वायामीति प्रतीच्यां, सोमो धेनुमाप्यायस्वेत्युदीच्यां, ओषधयस्संवदंत इति सर्वत्र यथाक्रमं निर्वाप्य; शुद्धादिभिः सिकतादिभिः प्रच्छाद्य पञ्चगव्यजलेन पुण्याहोदकेन वा यथाक्रमं सिञ्चेत्। प्रणवेन सापिधाय यावत्कर्मसमाप्तिस्तावत् सुरक्षितं गोपायेत्। कर्मान्ते देवता उद्वासयेदासप्तमात् प्रजाकाम आपञ्चरात्रात्पशुकाम आत्रिरात्रादन्नाद्यकामस्सद्यस्काल आयुष्काम इत्याह भगवान् बोधायनः॥ ६॥

इति षष्ठः खण्डः॥

## अथ चौलम्

जन्मनोधितृतीये वर्षे इमं कुमारं चौलेन कर्मणा संस्करिष्य इति सङ्कल्प्य; ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा रक्षाबन्धनं कृत्वा अङ्कुरार्पणं कृत्वा कुमारं भोजयित्वाऽग्नीन्धनादि-पात्रप्रयोगान्ते यवकुशजलद्वयशलालुग्लप्सदर्भपुञ्जीलशकृच्छलल्यसीन्युप्त्वा सीमन्तवर्जयादिब्रह्म-विसर्जनान्तेऽपरेणाग्निं कुमारं प्राङ्मुखमुपवेश्य त्रीण्या शलल्या त्रिभिर्दर्भपुञ्जीलैश्शलालुग्लप्सेनेति तूष्णीं केशान्विनीय विशिखा निदधाति। यथा वैषां कुलधर्मः स्यादपां सञ्सर्जनाद्याकेशनिधाना-त्समानम्। क्षुरं प्रक्षाळ्य गूढं निदधाति। तेन त्र्यहं कर्मनिवृत्तिः। वरं ददाति एवं गोदानं षोडशे वर्षे ग्लप्सपुञ्जीलशलली शिखानिधानवर्जम्॥ ७॥

इति सप्तमः खण्डः॥

## अथोपनयनम्

वसंतेग्निं प्रतिष्ठाप्य कौपीनाच्छन्नं कृतशौचं कुमारं दक्षिणत उपवेश्य इमं कुमारं उपनेष्ये इति सङ्कल्प्य ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा, रक्षाबन्धनं कृत्वा अङ्कुरार्पणं कृत्वा, सोदकं कलशं तण्डुलताम्बूलादियुक्तपात्रेणापिधायौषधीषु प्रतिष्ठाप्य ब्राह्मणान्प्रार्थयेत्। ओं कर्मणः पुण्याहं ब्रुवन्तु इति ब्रूयात् तेपि ओं पुण्याहं कर्मणोऽस्त्विति ब्रूयुरेवं त्रिः। यत्पुण्यं नक्षत्र (मित्यादि) कुरुते इत्यन्तं जपित्वा ततः ओं कर्मणे स्वस्ति भवन्तो ब्रुवन्तु इति ब्रूयात् तेपि ओं स्वस्ति कर्मणोऽस्त्विति ब्रूयुरेवं

त्रिः। स्वस्तये वायु(मित्यादि) भवन्तु न इत्यन्तं जपित्वा, ततः ओं कर्मण ऋद्धिं भवन्तो ब्रुवन्तु इति ब्रूयात्, तेप्यों कर्म ऋध्यतां इति ब्रूयुरेवं त्रिः। ऋध्यासे(त्यादि)समृद्धिरित्यन्तं जपित्वा मुखसमं कलशमुद्धरेत्। ततः कलशोदकं कुमारस्याञ्जलौ स्वस्ति पुण्याहसमृद्धिरस्त्वित्यादिवाक्यैर्निनयेत्। कुमारस्याचमनयोग्यतासिध्यर्थं नवतन्तून्धारयिष्य इति सङ्कल्प्य नवो नव इति मन्त्रेण ततस्त्रिसूत्रं प्रक्षिप्याचम्य, यज्ञोपवीतमिति यज्ञोपवीतं निधाय मात्रा सह कुमारं भोजयेदुष्णेन वायो इति यजुषा उष्णाश्शीतास्वप आनीय; आप उन्दन्त्विति ताभिश्शिर उनक्ति। त्रींस्त्रीन्दर्भान्नन्तर्धाय येनावपदिति चतसृभिः प्रतिमन्त्रं प्रतिदिशं प्रदक्षिणं प्रवपति, असावित्यत्र कुमारस्य नामोक्त्वा शर्मन्निति ब्रूयात्। एवं सर्वत्रावृधमन्त्रवर्जं अयमसावसावेष ते द्वयोश्शर्मेति दक्षिणतो माता ब्रह्मचारी वा यक्षुरेणेति प्रथमवपन्तं मातानुमन्त्रयत आनडुहे सयवे शकृत्पिण्डे केशानुपवपत्युप्त्वाय केशानित्युदुम्बरमूले दर्भस्तम्बे वा निदधाति; सम्यक् स्नापयित्वाचान्तं कुमारमुपवेश्याग्नीन्धनादिपात्रप्रयोगान्ते समित्कुशाम्बुकूर्चवस्त्राश्मदण्डाजिनमेखलांश्च पात्राणामुत्तरतः सकृत् प्रयुञ्ज्यात्सर्वत्र मानुषपात्राणि। सकृत्तत आज्यभागान्ते कुमारमायुर्दा इति पालाशं समिधमग्नावाधायोत्तरेणाग्निं दक्षिणेन पदातिष्ठेत्यश्मानमास्थाप्य रेवतीस्त्वेति द्वाभ्यां वासोभिमन्त्र्य, या अकृन्तन्निति तिसृभिः वासः परिधाप्य परिहितं परीदमित्यनुमन्त्रयते। मौञ्जीं मेखलां त्रिवृतां त्रिः प्रदक्षिणं इयं दुरुक्तादिति द्वाभ्यां परिवीय वाचयेदजिनं मित्रस्येति प्रक्षिप्य वाचयित्वोत्तरेणाग्निं प्रागग्रान्दर्भान् संस्तीर्य, तेष्वागन्त्रेत्येनमवस्थाप्य, वाचयित्वोदकाञ्जलिं कुमारस्याञ्जलावानीय ताभिस्समुद्रादिति त्रिः प्रोक्ष्य वाचयेदग्निष्ट इति दशभिः सकृत्कुमारस्य दक्षिणहस्तं गृहीत्वाग्नये त्वेति प्रतिमन्त्रं देवताभ्यो रक्षणाय दत्वा, ततस्सुमुहूर्ते देवस्य त्वेति यजुषा दक्षिणाङ्क उपवेश्योपनीय, सुप्रजा इति दक्षिणकर्णे जपति ॥ ८ ॥

इत्यष्टमः खण्डः ॥

ब्रह्मचर्यमागामित्यादि प्रसूत इत्यन्तं कुमार आह। को नामासीति गुरुणोक्ते कुमारः स्वनामोक्त्वा शर्मा नामास्मीति ब्रूयात्, कस्येत्युक्ते कुमारः प्राणस्येति ब्रूयात्, अयमसावेष त इति गुरुः सञ्चरासावित्यन्तं उक्त्वा, अध्वनामिति कुमारं वाचयेत्। अथ योगादीन्नवमन्त्रान्वाचयन् द्वितीयचतुर्थौ स्वयं ब्रुवन्प्रतिमन्त्रमेकादशाज्याहुतीः कुमारेण हावयित्वा समित्सन्नहनं जयादिब्रह्मविसर्जनान्तेऽपरेणाग्निमुदगग्रं कूर्चं निदधाति। तस्मिन् गुरु राष्ट्रभृदसीति यजुषोपविशति, तस्य पुरस्तात्प्रत्यगासीनः कुमारो दक्षिणेन पाणिना गुरोर्दक्षिणं पादमन्वारभ्याह सावित्रीं भो अनुब्रूहीति। तस्मा अन्वाह तत्सवितुरिति पच्छोर्धर्चशस्ततस्सर्वां व्याहृतीर्विहृताः पादादिषु दद्यात्पुनरर्धर्चश आद्यौ द्वे उत्तमां कृत्स्नायां कुमारोवृधमिति स्वमुत्तरमोष्ठं द्व्यावान्तमुपस्पृश्या-

चामेत् । ब्रह्मण आणीस्थ इति कर्णौ युगपत् करावुपस्पृश्य सुश्रव इति पालाशदण्डं दक्षिणहस्ते-नादत्ते । स्मृतं च म इत्येनं वाचयति । गुरोर्वरं ते ददामीति गुरवे वटुर्वरं दद्यात् । गुरुस्संस-दशकृत्वोपाल्याद्देवस्य त्वेति वरं प्रतिगृह्णाति । रुद्राय गामिति मन्त्रसन्नाम उदायुषेत्येनमुत्थाप्य वाचयति । तच्चक्षुरिति सूर्यं दृश इत्यन्तेन वटुरादित्यमुपस्थायाग्निं परित्वेति परिसृज्य परिषिञ्चतु । अग्नये समिधमिति द्वादशभिर्व्याहृताभिर्विहिताभिश्च प्रतिमन्त्रं समिधष्षोडशादध्यात् । ततः परिषिच्य यत्ते अग्ने मयि मेधामुपस्थापय, मानस्तोक इति जपित्वा मेधावीत्यादिभिः तिलकाति धृत्वा, पुनस्त्वेति समिधमादधाति । स्वस्ति श्रद्धामित्यग्निं संप्रार्थ्य ततो गुरुं मातरमन्यांश्च वृद्धान्नमस्कृत्य भिक्षां याचयेत् । ततो गुरुर्ब्रह्मचार्यसीति कुमारं संशास्ति । सर्वत्रानुशासने बाढमेवं करोमीति वटुर्ब्रूयात् । प्रथमे त्वस्मिन् त्र्यहमेतमग्निं धारयन् न क्षारलवणं भुञ्जीत, चतुर्थेहनि गुरोर्वासोन्य-त्परिधाप्य यस्य त इति पूर्वपरिहितं वास आदत्ते ॥ ९ ॥

इति नवमः खण्डः ॥

## अथ पालाशहोमः

पालाशं कर्म कुर्वन् ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य, पालाशं कर्म करिष्य इति सङ्कल्प्य, पालाशस्याधस्थात्स्थंडिलं कल्पयित्वा, तत्रोपनयनाग्निं प्रतिष्ठाप्य स्थण्डिलोल्लेखनादि-पूर्णपात्रासादनान्ते तत्र त्रीणि स्थण्डिलानि प्रागपवर्गाण्युदगपवर्गाणि वा कृत्वा, तेषु प्रणवश्रद्धा-मेधाभ्योर्चनं कृत्वा यश्छन्दसामिति नवभिर्वाक्यैः प्रणवं, श्रद्धयाग्निरिति सूक्तेन श्रद्धां मेधा देवीति च चतुर्भिरनुवाकैर्मेधामुपस्थाय त्रिमधुरेण ब्राह्मणान् भोजयित्वाशिषो वाचयित्वाग्नीध्रनाद्याज्य-भागान्ते समन्तादपूपैरग्निं परिश्रित्य यश्छन्दसामिति छन्दस्सूक्तं वाचयन् हावयेच्चतुर्भिः पञ्चभि-ष्षड्भिरेकेन चत्वारीत्यक्त्वा, ततः प्रतिवाक्यं चतस्रो द्वाभ्यां चतुर्भिरेकेनेत्येकादशाज्याहुतीः कुमारेण हावयित्वा, समित्सन्नहनं जयादिब्रह्मविसर्जनान्ते वटुर्मेखलाजिनदण्डवस्त्रान्पालाशे प्रतिष्ठाप्यान्यानि नवानि गृह्णीयात् ॥ १० ॥

इति दशमः खण्डः ॥

## अथ श्रावणप्रयोगः

श्रावण्यां पौर्णमास्यां प्रोष्ठपद्यां आषाढ्यां वा गुरुशुक्रमौढ्ये अर्धरात्रात्पूर्वं ग्रहण-संक्रान्त्यधिमासादिदोषवर्जितायां ओषधीनां प्रादुर्भावे सह शिष्यैरध्यायोपाकर्म करिष्य इति संकल्प्य सर्वमाणवकशिरांसि वापयित्वा महापगाप्सु स्नात्वा; प्रजापतिं सोममग्निं विश्वान्देवानुप-निषदत्रयं ब्रह्माणं स्वयंभुवं सदसस्पतीति नव ऋषीन्निवीतिनो यथाक्रमेणार्चयन्ति तर्पयित्वा, ततोग्नि-मुखान्ते प्रजापतये काण्डऋषये स्वाहेत्यादिप्रयोगेणाष्टौ हुत्वा; सदसस्पतिमिति नवमीं जुहोति ।

ततोपवीती वेदादीन् हुत्वा सक्तूंस्तिलाञ्जुहोमीत्यादि पञ्चविंशदाहुतीर्हुत्वा यज्ञोपवीतमिति मन्त्रेण यज्ञोपवीतानि हुत्वा स्वपितृभ्यो दत्वा, स्वयं च धारयेत् । ब्रह्मचारिणो मेखलादीन्यवधारयेयुः । दर्भेष्वासीनो दर्भान्धारयमाणश्चतुरोनुवाकान् वेदस्यादिमधीयीत समित्सन्नहनं जयादिब्रह्म-विसर्जनान्ते ब्राह्मणान् भोजयेत् । श्वः प्रभातेग्निमुपसमाधाय संपरिस्तीर्य सावित्र्या समित्सहस्रं आधास्य इति संकल्प्य घृताक्तसमित्सहस्रमादध्यात् । अत्र सविता देवता तदभावे सावित्रीसहस्रं जपेत्, पूर्ववदुत्सर्जनम् ॥

इत्येकादशः खण्डः ॥

## अथ वेदव्रतम्

अथ वेदव्रतानामुदगयनकालस्तस्मिन् यतासुरिमं माणवकं प्राजापत्यसौम्याग्नेयवैश्वदेव-व्रताख्यैः कर्मभिः समानतन्त्रेण संस्करिष्ये इति सङ्कल्प्य तूष्णीं केशान्वापयित्वा, महापगाप्सु यथाविधि स्नापयित्वाचामेत् । ततो माणवकः पवित्रपाणिर्निवीती सन्नपराह्ने प्राजापत्यादिनवऋषीन्नि-वीतिनोर्चयति । तर्पयित्वा ततोग्निरुपसमाधानादिपात्रासादनान्ते चतस्र औदुम्बरीसमिधो वासश्च मदन्तीभिस्सह प्रयुञ्ज्यात् । प्रणीतासादनान्तेऽग्नेः पुरस्ताज्जलपूरितमदन्तीरधिश्रित्य ब्रह्मासनाद्यग्नि-मुखान्तेऽन्वारब्धे व्रजनि जुहोत्याचार्यः । प्रजापतये काण्डऋषये प्रजापते न त्वद्रयीणां पतिं प्रजापते त्वन्निधिपाः तवेमे लोकाः प्रजापतिं प्रथमं यो राज इति; सोमाय काण्डऋषये सोमो धेनुमषाढं युत्सुत्व॰ सोमक्रतुभिर्याते धामानि हविषा त्वमिमा ओषधीर्याते धामानि दिवीति; अग्नये काण्डऋषयेग्ने नय सुपथा प्रवद्शुक्रायाच्छागिरोमतयोग्ने अस्मदग्ने त्वं पारय प्रकारवोमनना इति; विश्वेभ्यो देवेभ्यः काण्डऋषिभ्य आनो विश्वे शन्नो देवा ये सवितुरग्न याहि द्यौः पितुर्विश्वेदेवा इति, सा॰ हिकैः याज्ञिकैर्वारुणैर्ब्रह्माणं स्वयंभुवं सदसस्पतिं च हुत्वा स्विष्टकृत्स्थाने सदसस्पति-मित्यृचा जुहोति । ततो माणवकः समित्पाणिरुत्तरतः प्रत्युत्थायाग्ने व्रतपत इति चतुर्भिः प्राजापत्यं व्रतं चरिष्यामीत्युपतिष्ठते । समिधमग्नावादध्यादत्राग्नये त्यागो माणवको मदंतीरप उपस्पृश्य नमो वाच इत्यनुवाकं जपेच्चतस्र औदुम्बरीसमिधो मूलादाराभ्याग्राद्वा तेनाक्त्वा पृथिवी समित् इति चतस्रो द्वाभ्यां दधाति । मन्त्रोक्तदेवतोपस्थानमंत्रैः सौम्यव्रतमुपस्थाय युञ्जते मन इति चतुर्थप्रश्नं दशानुवाकान् देवा वै सत्रमासतेति पञ्चमप्रश्नं द्वादशानुवाकान् कृत्स्नं माणकं आचार्यो वाचयेदनु-वाकानामाद्यपदानि वा युञ्जते सवितेति वा पूर्वोक्तदेवतोपस्थानमन्त्रैः तृतीयादेरुपस्थाय समिधं महेरेदाचार्यः । समित्सन्नहनं जयादिब्रह्मविसर्जनान्ते माणको मदन्तीरप उपस्पृश्य शन्नो वातः पवतामिति शान्तिं जपेत् । चक्षुर्निमीलनं वाङ्नियमनं कृत्वाहतेनोष्णीषेण वाससा प्रदक्षिणं समुखं शिरो वेष्टयित्वा स्वावस्तमिते ग्रामं गत्वा गृहं प्रविश्य वाग्यतस्तां रात्रिं तिष्ठेत् । श्वोभूतेखिलेऽछदि-

दर्शेऽग्निमुपसमाधाय प्रज्वाल्यालंकृत्य परिस्तीर्य वेष्टनवस्त्रं विमुच्याचार्यस्य मुखमभिदर्शयत्यग्निमादित्य- मुदकुम्भमश्मानं वत्समाकाशं हिरण्यं च दर्शयित्वा, शिरोवेष्टनवस्त्रं गुरवे दद्यात् । वयस्सुपर्णा इत्यादित्य- मुपतिष्ठते । एवमेवोत्सर्जनमाद्यचारिषमशकमराधीत्युपस्थाने विशेषः । समिद्धोमस्त्वयं विशेषो यौस्सामिदिति चतस्रोभ्यादधाति । सर्वं पूर्ववत् कृत्वा निमीलनादिति च वर्जयेद्ब्राह्मणान् भोजयेदाशिषो वाचयेदित्याह भगवान् बोधायनः ॥ १२ ॥

इति द्वादशः खण्डः ॥

## अथ स्नातकव्रतम्

वेदमधीत्य स्नास्यन् स्नानं करिष्य इति संकल्प्य प्रागुदयाद्व्रजं प्रविश्यान्तर्लोम्णा चर्मणा द्वारं पिधायास्ते । नयनमेतदहरादित्योभितपेन्मध्यन्दिनेऽग्निं प्रतिष्ठाप्याग्नीन्धनादि पात्रप्रयोगान्ते समित्सूत्रे वस्त्रे मणियुगळं स्रक्सुगन्धप्रवृत्तौ शीतोष्णाम्बुक्षुरकटयवच्छत्रदण्डाञ्जनदर्पणोपानद्द्वयकुश- शकृत्स्नानचूर्णौदुम्बरकाष्ठानि सकृत्प्रयुञ्ज्यात् । आज्यभागान्ते इमꣳस्तोममिति पालाशीं समिध- मग्नावाधाप्यापरेणाग्निं कट उपविश्य त्र्यायुषमिति क्षुरमभिमन्त्र्य शिवो नामासीति यजुषा वप्त्रे प्रदायापांसꣳसर्जनाद्याकेशनिधानात्समानम् । जघनार्धे व्रजस्योपविश्य विस्रस्य मेखलां ब्रह्मचारिणे प्रयच्छति । ताꣳस इदमहमिति यजुषोदुम्बरमूले दर्भस्तम्भे वोपगूहति । अद्भिरापोहिष्ठेति तिसृभिर्हिरण्यवर्णा इति तिसृभिष्षड्भिः स्नापयित्वा अन्नाद्यायेत्यौदुम्बरकाष्ठेन दतो धावते । स्नानीयेनोद्वर्त्य स्नात्वा सोमस्येति यजुषाऽहतमुत्तरं वासः परिधाय सार्वसुरभिचन्दनं नमो ग्रहाय चेति प्रतिनमस्कारं देवताभ्यो रक्षणाय दत्वाप्सरस्वित्यात्मानमनुलिप्य मणिꣳसौवर्णं सोपधानं सूत्रप्रोतमियमोषध इति उदकपात्रे त्रिः प्रदक्षिणं परिप्लाव्यापाशोस्सुर इत्यर्धर्चत्रयेण कण्ठे बध्वा सादरमणिमप्येवं सव्ये पाणौ तूष्णीं बध्नात्यहतमुत्तरं वासः रेवतीस्त्वेति समानम् । तस्य दशायां प्रवर्तौ प्रबध्य दर्व्यामादायाज्येनाभ्यानयन् आयुष्यमिति प्रतिमन्त्रमष्टावाज्याहुतीर्हुत्वा समित्सन्नहनं जयादिब्रह्मविसर्जनान्ते आयुष्यमित्यादिभिः प्रवर्तमेवैकं दक्षिणकर्णे बध्नात्येताभिरेव सव्ये द्वितीयम् । शुभिकेशिर इति स्रजं शिरसि निधाय यामाहरदिति बध्वा यदाञ्जनमित्याञ्जनेन चक्षुषी आङ्क्ते । मयि पर्वतेति चतुर्णां यजुषामेकेन वा यन्मे वर्च इति आदर्शमीक्षते । प्रतिष्ठे स्थ इत्युपानहौ पादाभ्यां गृह्णाति । प्रजापतेश्शरणमसीति छत्रं देवस्य त्वेति वैणवदण्डमादाय वाचं यच्छत्यानक्षत्रो- दयादुदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य देवीष्षड्डुर्वीरित्यर्धर्चत्रयेण प्रतिदिशमुपस्थाय माहास्महीति चन्द्रमसं च रातिना सम्भाष्य यथार्थं गच्छति *अपरं तूष्णीमेव तीर्थे स्नात्वा तूष्णीं समिधमादधाति ॥ १३ ॥

इति त्रयोदशः खण्डः ॥

---

* पक्षान्तरम् ॥

## अथ पाणिग्रहणम्

पाणिग्रहणे स्मार्तं पुण्याहं वाचयित्वा अनुहवमिति शाकुनादिमन्त्रान्वाचयन् विवाहागारमेत्य पादौ प्रक्षाळ्याचम्य प्राणानायम्य यतासुर्धर्मप्रजासम्पत्यर्थं स्त्रियमुद्वह इति सङ्कल्प्य विश्वेत्तात इति विधिवद्रक्षाबन्धनं कृत्वा द्वितीययज्ञोपवीतं च सन्धार्य मदर्थं कन्यां वृणीध्वमिति चतुरो वरान्प्रेषयित्वा तान्प्रसुग्मंतेति द्वाभ्यामभिमन्त्रयते । कन्यादातारं गत्वा ब्रुवते, पूर्वं प्रपितामहपूर्वकं वरगोत्रमुच्चार्य, नप्त्रे पौत्राय पुत्राय अस्य नप्त्रीं पौत्रीं पुत्रीं कन्यां वृणीमह इति वृणीध्वं तस्मै दास्यामीति दाता प्रत्युक्त्वा त्रिरुक्त्वा शचीपूजां कृत्वाथ वराय मधुपर्कं कुर्वन् उदगग्रं कूर्चं निदधाति । तस्मिन्राष्ट्रभृदसीति यजुषोपविष्टाय आपः पाद्या इति दाता प्राह ।आपः पादावने जन इति वरस्ता आपोऽभिमन्त्र्य पूर्वं दक्षिणं पादं दत्वा प्रक्षाळयितारमुपस्पृश्य वरो मयि मह इति यजुषात्मानं प्रत्यभिमृशेत् । कूर्चाभ्यां परिगृह्य मृण्मयेनार्हणीयाप इत्युक्त आमागन्निलभिमन्त्र्याञ्जलावेकदेश आनीयमाने विराजोदोहोसीति यजुर्जप्त्वाशेषं पुरस्तान्निनीयमानं समुद्रं व इत्यभिमन्त्रयते । अत्र वासो गवादिकं यथाशक्ति दत्वा वरमलंकृत्य दधि मधुसंसृष्टं कांस्येन वर्षीयसा पिधाय कूर्चाभ्यां परिगृह्य दाता मधुपर्कमित्युक्ते त्रय्यै विद्याया आमागन्निति द्वाभ्यां मधुपर्कमभिमन्त्र्यामृतोपस्तरणमसीत्यपः पीत्वा यन्मधुन इति मधुपर्कं सकृन्मन्त्रेण द्विस्तूष्णीं अमृतापिधानमसीत्यपः पीत्वाचामेद्गौरसीत्युक्ते गौरसीति यजुषा गामभिमन्त्रयते । मम चामुष्य चेति स्वदातृनाम्नोः षष्ठ्यन्तयोर्निर्देशः । यज्ञो वर्धतामित्युपांशूक्त्वा ओमुत्सृजतेत्युच्चैरुक्त्वा विसर्जयेत् सिद्धमन्नं भूतमित्युक्ते साविराडित्येतैरुपांश्वभिमन्त्र्य ओं कल्पयतेत्युच्चैर्वरः प्रतिब्रूयात् ॥ १४ ॥

इति चतुर्दशः खण्डः ॥

## अथ कन्यादानम्

ततो वरं दातृसमीपं नीत्वाऽऽवरणवस्त्रात्पुरतो वेणुपात्रस्थतण्डुलेषु वरं प्रत्यङ्मुखमुपवेश्य तत्पश्चिमतो वेणुपात्रं च तण्डुलेषु प्राङ्मुखः पत्नीसमेतः स्वर्णादिनालङ्कृतां स्वलङ्कृतवेश्मनि प्राङ्मुखीं कन्यामुपवेश्य विंशतिदीपान् कांस्यपात्रद्वये निधाय सुवासिन्यौ दीपिकापात्राण्यादाय दक्षिणोत्तरयोस्तिष्ठेताम् । ततः कन्यापिता पितामहो भ्राता स्व(लङ्)कृतो जनेन वा महासंकल्पं कुर्यात् । एवंगुणविशेषणविशिष्टायां शुभतिथौ गङ्गावालुकाभिस्सप्तर्षिमण्डलपर्यन्तं कृतराशेर्वर्षसहस्रावसाने एकैकवालुकापकर्षक्रमेण सर्वराश्यपकर्षसंमितकाले मया सह ब्रह्मलोके निवाससिध्यर्थं तिलैः सूर्यमण्डलपर्यन्तं कृतराशेर्वर्षसहस्रावसाने एकैकतिलापकर्षक्रमेण सर्वराश्यपकर्षसंमितकाले सूर्यलोके निवाससिध्यर्थं यवैश्चन्द्रमण्डलपर्यन्तं कृतराशेर्वर्षसहस्रावसाने एकैकयवापकर्षक्रमेण

सर्वराड्यपकर्षसंमितकाले चन्द्रलोके निवाससिध्यर्थं दशपूर्वेषां दशापरेषां मद्वंश्यानां पितॄणां नरका-दुत्तीर्य (नित्यनिरतिशयानन्दशाश्वते)मया सह ब्रह्मलोके निवाससिध्यर्थं (त्रिगुणीकृताग्निष्टोमाप्तोर्याम-वाजपेयपौण्डरीकादिशतक्रतुफलावाप्त्यर्थं हिरण्यगर्भप्रजापतिप्रीत्यर्थं लक्ष्मीनारायणोमामहेश्वरप्रीत्यर्थं) मत्स्यपुराणोक्तमहादानान्तर्वर्तिषोडशमहादानमध्ये सालङ्कृतकन्यादानं करिष्य इति संकल्प्य यथाशक्ति वरं पूजयित्वा,

## (कन्यादानश्लोकाः)

कन्यां कनकसंपन्नां कनकाभरणैर्युताम् ।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥

कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वतः ।
कन्ये मे सर्वतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥

विश्वंभराः पञ्चभूताः साक्षिण्यः सर्वदेवताः ।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥

अधिकः पाठः

कन्यां सालंकृतां साध्वीं सुशीलाय सुधीमते ।
प्रयतोऽहं प्रयच्छामि धर्मकामार्थसिद्धये ॥

पूर्वोक्तगोत्रनामान्युच्चार्य गौतमीं यज्ञदारीं अस्य पुत्रीं नप्त्रे पौत्राय पुत्राय लक्ष्मीनारायण-स्वरूपवराय तुभ्यं प्रजासहत्वकर्मभ्यः प्रतिपादयामि इति कन्याफलसहितताम्बूलं स्वर्णोदकपूर्वं दत्वा स्वस्तीति प्रतिवचनं, देवस्य त्वा सवितुः-प्रतिगृह्णामि, राजा त्वा वरुणो नयतु देवि दक्षिणे प्रजापतये कन्यां, तेनामृतत्वमश्यां, वयो दात्रे, मयो मह्यमस्तु प्रतिगृहीत्रे, क इदं कस्मा अदात्, कामः कामाय, कामो दाता, कामः प्रतिगृहीता, कामं समुद्रमाविश, कामेन त्वा प्रतिगृह्णामि, कामैतत्ते एषा ते कामदक्षिणा उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु । ("धर्मप्रजासिद्ध्यर्थं कन्यां प्रति-गृह्णामि" इति वरः वदेत्) धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयमिति वदेन्नातिचरामीति प्रतिवचनं कुर्यात् ॥ १५ ॥

इति पञ्चदशः खण्डः ॥

ततस्सुमुहूर्ते मङ्गळाष्टकपुरस्सरं स्वस्त्यष्टाशीतिसहस्राणामित्यादि सुप्रसन्ना भवन्त्वित्यंतं वदेद्ध्रुवन्त इति मन्त्रेण दम्पती अन्योन्यशिरसि गुडजीरकानावपतः । ततो वरः कन्यां चक्षुषी

उपसंहृत्याभ्रातृघ्नीमिति वधूं दृष्ट्वा जपत्यघोरचक्षुरिति समीक्षेत । अत्र वरवध्वौ सङ्कल्पयतः आवाभ्यां कर्माणि कर्तव्यानि प्रजाश्चोत्पादयितव्या इत्यंगुष्ठेनोपमध्यमया चाङ्गुल्या दर्भं संगृह्य इदमहमिति यजुषा तस्या भ्रुवोरन्तरं दर्भेण संमृज्य प्रतीचीनं निरस्याप उपस्पृश्य, जीवा॰ रुदन्तीति निमित्ते जपित्वा युग्मान्विप्रान् व्युक्षत्क्रूरमिति स्नानीयाद्भ्यः प्रेषयेदर्यम्ण इति यजुषा तस्याश्शिरासि दर्भेण्वान्निधाय खेनस इति दक्षिणं बहिर्युगच्छिद्रं प्रतिष्ठाप्य शन्ते हिरण्यमिति सुवर्णं छिद्रेन्तर्धाय हिरण्यवर्णा इति पञ्चभिः सकृत्स्नापयित्वा परित्वेत्यहतवासोभ्यामाच्छाद्य ॥

## (माङ्गल्यधारणम्)

(माङ्गल्यपूजां कृत्वा मङ्गळाशीर्वचनं लब्ध्वा) माङ्गल्यं तन्तुनानेनेति मन्त्रेण माङ्गल्यसूत्रं कन्यायाः कण्ठे बध्वाशासानेत्यासीनां योक्त्रेण पत्नीं सन्नह्यति ॥

## अत्र कपिलावाचनम्

अत्र कपिलावाचनादिमङ्गळाचारप्राप्तं कुर्यात् । तस्यायं प्रयोगः, वरः स्वाञ्जलिना पयसा वध्वञ्जलौ द्विरुपस्तीर्य द्विस्तण्डुलानोप्य द्विरभिघारयति । ततो वराञ्जलावन्यः ताभ्यां तण्डुल-पयोभ्यामेवं कृत्वा वध्वञ्जलेरुपरि स्थाप्य सोदकं कलशमादाय ब्राह्मणैस्सह कपिला॰स्तारयतु दक्षिणाः पांतु बहुदेयं चास्तु पुण्यं वर्धतां शांतिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु अविघ्नमस्तु आयुष्यमस्तु आरोग्यमस्तु स्वस्ति शिवं कर्मास्तु दम्पत्योर्जन्मनक्षत्रे सगृहे सदैवते सह सोमेन क्रियतां शान्तिरस्त्वित्यादि पूर्ववत् । प्रजापतिस्त्रियामित्यादि कामस्समृध्यतामित्यन्तं ब्रुवन्नञ्जलौ संततानक्षतान् शिरसि रोपयेदेवं त्रिः । द्वितीयपर्याये वधूः स्वसंडुलपयोभ्यां पूर्वं वराञ्जलौ कुर्यात् । तृतीयपर्याये संसृष्टाभ्यामसावित्यत्र प्रजाः पशवो यज्ञ इति क्रमेण ब्रूयात् तूष्णीं चतुर्थम् ॥ १६ ॥

इति षोडशः खण्डः ॥

## अथ प्रधानहोमः

अथैनां दक्षिणहस्ते गृहीत्वा पूषात्वेतोनयत्वित्यग्निमभ्यानीय (जुहुयात्)

विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्यां ऋतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥

हविष्मतीरिति स्नापयित्वान्यवस्त्रमलङ्कृत्य युञ्जानः प्रथमं मन इति द्वे आहुतीर्जुहुयात्, तथा तन्त्रं प्रयोजयेत्, अपरेणाग्निं उदगग्रे कटे युगपदुपविशतः, उत्तरो वरोऽग्नींधनादिपात्रप्रयोगान्ते पवित्र-करणाद्याज्यसंस्कारान्ते अन्वारब्धायां सोमः प्रथम इति द्वाभ्यां वधूमासीनामभिमन्त्र्यास्या दक्षिणं

पाणिमुत्तानं साङ्गुष्ठं गृभ्णामि त इति चतसृभिः दक्षिणेनावाक्पाणिना गृहीत्वोत्तरेणाग्निं दक्षिणेन पदा प्राचीमुदीचीं वा दिशमभिप्रक्रमयन्नेकमिष इति प्रतिमन्त्रं सप्तपदानि गत्वा सखेत्यादिसूनृत इत्यन्तं सप्तमे पदे निहिते जपति । सब्रह्मा प्रदक्षिणमग्निं कृत्वा पूर्ववदुपविश्यान्वारब्धायां सोमाय जनिविद इति प्रतिमन्त्रं षोडशाज्याहुतीर्हुत्वोत्तरेणाग्निं दक्षिणेन पदाऽऽतिष्ठेत्यश्मानमास्थाप्य वध्वञ्जलिं स्रुग्वत्संस्कृत्योपस्तीर्य द्विर्लाजानोप्य द्विरभिघारयति । तस्या भ्राता लाजानावपतीत्येक इयन्नार्युपब्रूत इति स्रुचेव तिर्यग्जुहोति । तुभ्यमग्र इति तिसृभिः प्रदक्षिणमग्निं कृत्वाऽश्मास्थापनादिपूर्ववत्कृत्वार्यमणमिति जुहोति । पुनः परिक्रमणादि पूर्ववत्कृत्वा त्वमर्यमेति जुहोति । पुनः परिक्रम्य समित्सन्नहनं जयादिब्रह्मविसर्जनान्ते अपरेणाग्निं वधूमुत्तरत उपवेश्य प्रत्वामुञ्चामीति द्वाभ्यां योक्त्रं विमुञ्चति । नित्यो धार्योऽयमग्निरनुगतश्श्रोत्रियागारादग्निमाहृत्यायतने विधिनाग्निं प्रतिष्ठाप्यान्यतरास्मिन्काल उपवसेत् । स्वयं पत्नी वाऽऽयाश्चेति व्याहृतीभिश्च द्वे आहुतीर्जुहुयान्नोपवसेत् ॥ १७ ॥

इति सप्तदशः खण्डः ॥

## अथ प्रवेशहोमः

अथ वधूं स्वगृहान्प्रत्यानयन्नुदुत्तरामिति तिसृभिरभिमन्त्र्य सङ्काशयामीति गृहान्दर्शयति, शर्मवर्मेति लोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोम मध्येगारस्यास्तीर्य गृहान् भद्रानिति गृहान् प्रपादयन् पत्नीं वाचं यच्छत्यगारस्येशानदेशेऽग्नीन्धनाद्याज्यभागान्तेन्वारब्धायामागन्गोष्ठमिति प्रतिमन्त्रं त्रयोदशाज्याहुतीर्हुत्वा समित्सन्नहनं जयादि ब्रह्मविसर्जनान्ते अपरेणाग्निं उदगग्रे कटे युगपदुपविशत उत्तरो वरो या पुंप्रसूर्जीवपुत्रायास्तस्याः पुत्रं वध्वंके सोमेनादित्या इत्युपवेश्य प्रस्वस्थ इति यजुषा तस्मै फलानि प्रदापयेदिह प्रियमिति द्वे ऋचौ जपतः । उभौ वाचं यच्छत्यानक्षत्रोदयादुदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य ध्रुवक्षितिरिति द्वाभ्यां यथालिङ्गं ध्रुवमरुन्धतीं च दर्शयति ॥ १८ ॥

इत्यष्टादशः खण्डः ॥

## अथाग्नेयस्थालीपाकः

अथ वधूमाग्नेयस्थालीपाकेन याजयिष्य इति सङ्कल्प्य पत्न्यवहन्ति चरुं श्रपयित्वाभिघार्य प्राचीनमुदीचीनं वोद्वास्य प्रतिष्ठितमभिघार्याग्नींधनाद्यग्निमुखान्तेन्वारब्धायां स्रुच्युपस्तीर्य चरुमध्याद्द्विरवदायाभिघार्य हविः प्रत्यभिघारयत्यग्नये स्वाहेति मध्येग्नौ जुहोति । पुनस्स्रुच्युपस्तीर्य उत्तरार्धात्सकृदवदाय द्विरभिघार्य न हविः प्रत्यभिघारयत्यग्नये स्विष्टकृते स्वाहेत्युत्तरार्धपूर्वार्धे हुत्वा अग्नये रुद्राय तंतिचरायेति समिधमिध्मसन्नहनं चाग्नौ प्रहृत्य न जयादयो दर्व्या परिधीननक्ति ।

पात्रप्रयुक्तदर्भाग्राणि दर्व्यामभ्यज्य स्रुवे मध्यमूले अनक्ति । मूलाञ्जने दक्षिणं पाणिमधः कुर्यादेवं त्रिः । तृणमप आदाय पाणिभ्यां दर्व्यां प्रतिष्ठाप्य हुतदेवता उद्दिश्याग्नावग्रं प्रहरति । त्रिरुद्यम्य तृणं प्रहरति । त्रिरङ्गुल्या निर्दिश्याग्निमभिमन्त्र्य भूमिमुपस्पृशेन्मध्यमं परिधिं प्रहरति । इतरौ प्रहरन्नुत्तरार्धस्याग्रमङ्गारेषूपोहति । परिधीनभिमन्त्र्याघारसमिधौ प्रहृत्य जुह्वा स्रुवन्निधाय विश्वेभ्यो देवेभ्यस्संस्रावभागेभ्य इति संस्रावं जुहोति । अविज्ञातप्रायश्चित्तानि करिष्य इति हुत्वा खिद्धं शिष्टचरुणा सर्पिष्मता ब्राह्मणान् भोजयेद्वृषभं वधूवरायापचिताय दद्यात् ॥ १९ ॥

इत्येकोनविंशः खण्डः ॥

## अथौपासनम्

सायं प्रातरत ऊर्ध्वं हस्तेन तण्डुलैर्यवैर्वा द्वे आहुती जुहुयात् । स्थालीपाकवद्दैवतं सौरी पूर्वाहुतिः । प्रातरुभयतः परिषेचनम् । स्थालीपाकवदत ऊर्ध्वं दक्षिणावर्जं उपोषिताभ्यां पर्वसु कार्यः । पूर्णपात्रो वा दक्षिणा पौर्णमास्यामुपक्रमस्तत्र पर्वस्थालीपाकोपक्रमणार्थं पार्वणेष्ट्या यक्ष्ये इति संकल्प्य प्रतिपदस्थालीपाकं कुर्यात् । सद्यस्कालं पर्वणि वैकृतलाजहोमवर्जं ओषधय हविष्कर्माणि दध्यञ्जलिहोमं च पार्वणवत्कुर्यात् । यथोपदेशं प्रधानाहुतयोग्निमुखस्विष्टकृतोर्मध्येन्यप्रधानेऽवत्त-मभिघार्य हविः प्रत्यभिघारयेत् । सर्वमौपासनवैश्वदेवफलीकरणहोमानि यावदुक्तं कुर्यादष्टकेशान-सर्पपार्वणस्थालीपाकेग्निहोत्री । को वा विधिः स्यात्तस्यायं प्रयोगश्चरुं पक्त्वा प्रज्वाल्याग्निं परिसमूह्य पर्युक्ष्याभ्यर्च्य परिस्तीर्यापरेणाग्निं प्रागग्रान् दर्भान् संस्तीर्य तेषु चरुं निधायाग्निं परिषिच्य चरुणा स्रुचं पूरयित्वा ततः प्रधानहोमान् हुत्वा लेपं बर्हिष्योषधीभ्यो निमृजेत् । तत एव स्विष्टकृतं हुत्वा दक्षिणतो भूम्यां प्राचीनावीती स्वधा पितृभ्यो लेपं निमृज्याग्निं परिषिच्य लेपं प्राश्याचम्य पुनः प्राश्याचम्य *उदङ्वृत्योत्सृप्य शेषं भक्षयित्वा हस्तं निर्लिह्याचामेत् । त्रिरात्रमुभयोरधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जमेकशय्यासने एकशय्यायां तयोरन्तरेण न्यग्रोधमौदुम्बरं आश्वत्थं प्लक्षं वा दण्डं पलाशं वा गन्धलिप्तं वाससा सूत्रेण वा परिवीतं निदधाति ॥ २० ॥

इति विंशः खण्डः ॥

## अथ शेषहोमः

तच्चतुर्थ्यामपररात्र उदीर्ष्वात इति द्वाभ्यां दण्डमुत्थाप्य प्रक्षाल्य निधायाग्नीधनाद्याज्य-भागान्तेऽन्वारब्धायामग्ने प्रायश्चित्त इति प्रतिमन्त्रं सम्राज्याहुतीर्हुत्वा समित्सन्नहनं जयादि ब्रह्मविसर्जनान्तेऽपरेणाग्निं प्राचीमुपवेश्य तस्याश्शिरसि आज्यशेषाद्भूस्स्वाहेति चतुर्भिर्निनये-

*" दम्पत्योरुत्सृप्य " इति पाठान्तरम् ।

दपश्यन्त्वेति वधूर्वरमीक्षेत । द्वितीयापश्यन्त्वेतिवरो वधूस्समञ्जन्त्वित्याज्यशेषेण हृदयदेशे युगपत्संमृज्य प्रजापते तन्वं म इति तिस्रो जपित्वा या ते अग्ने इत्यग्निमात्मन्यारोप्यारोहोरुमित्यनुवाकं समावेशने जपेदरो वै नाभिमन्त्रयेत । ऋतुस्नातायां भार्यायां ऋतुसमावेशने शुभेहनि दम्पती यथाचारं मङ्गलस्नातौ भूत्वा रात्रौ पुण्याहं वाचयित्वा विष्णुर्योनिं कल्पयत्विति समृद्धयान्ताभिरनुमन्त्रयते परेद्युः सद्यो वाभ्युदयं कुर्यात् ॥ २१ ॥

इत्येकविंशः खण्डः ॥

## अथ नाकबलिः

अथातो नाकबलिविधिं व्याख्यास्यामः, चतुर्थ्यामपररात्रौ शेषहोमं कृत्वा गृहमध्येऽस्तद्वयमात्रं चतुरश्रं गौरवर्णैः पञ्चवर्णैर्वा तण्डुलैः पुष्कराकारं लिखित्वा दक्षिणोत्तरयोस्सूपलवणगजौ लिखित्वा इन्द्राणीं तदुत्तरतो गौरीं च प्रतिष्ठाप्य तत्र हरिणीघटं यथाक्रमं निधाय, तन्तुभिरावेष्टयाथ वधूवरावेत्य वर उत्तरत आसीनः प्राणानायम्य (वध्वाश्रितविश्वावसुगन्धर्वनिरसनद्वारा स्वस्त्रीत्वसम्पादनार्थं) नाकबलिकर्म करिष्य इति सङ्कल्प्य, गौरीं शचीं त्रयस्त्रिंशद्वै देवाः सोमपा इत्यावाह्य षोडशोपचारैरभ्यर्च्याथ वृद्धसुवासिनी स्रग्वेष्टितगळा तिलकाय(सा)सिञ्च धृत्वा पुरस्तादुदकधारां स्रावयति । त्रयस्त्रिंशद्दीपान् कांस्यपात्रचतुष्टये निधाय चतस्रस्सुवासिन्यः दीपिकापात्राण्यादाय याज्ञिकः त्रयस्त्रिंशद्वै देवास्सोमपा इति सिंहे व्याघ्र इत्यनुवाकेन त्रिः प्रदक्षिणीकृत्य प्रागादिचतुर्दिक्षु प्रतिष्ठाप्य इन्द्राणीं प्रार्थयेत् ॥

देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ।
विवाहभाग्यमारोग्यं भर्तृलाभं च देहि मे ॥

इति संप्रार्थ्य ततो रङ्गवल्यां प्रतिष्ठितघटवेष्ठिततन्तूनुद्वास्य पुष्करं प्रविश्य प्रागादि पञ्चदिक्षु प्राचि तिष्ठस्यादधति इत्यादिबलिमुदकपूर्वं विसृज्य वर उत्तरत आसीनः प्राणानायम्य अस्याः धर्मपत्न्याः यावज्जीवं दीर्घसौमङ्गल्यसिध्यर्थं नीलमणिधारणं करिष्य इति सङ्कल्प्य, नीललोहितमिति मुक्ताप्रवाळग्रथितं सूत्रं कण्ठे बध्वा, इन्द्राय राज्ञ इत्युत्तरतो लवणगजस्योपरि वरः स्थित्वा दक्षिणतः सूपगजस्योपरि वधूः स्थित्वान्योन्यं गजं विनिमय्य सम्भाषणेन त्रिः प्रदक्षिणीकृत्य उपविश्य, वधूवरौ नूतनाचित्रवस्त्राणि धृत्वा फलताम्बूलदानहरिद्रादानानि कृत्वा, फलसहितदधिमध्वादिप्राशनं कृत्वा, नीराजनसदःपूजाशीर्वादाक्षतान्स्वीकृत्य शूर्पदानानि कृत्वा, बन्धुभ्यस्ताम्बूलादीनि मिथुनेभ्यः दत्वा, स्वयं ताम्बूलचर्वणं कृत्वा इषत्पुत्रग्रहणं तस्याः श्वशुरयोर्हस्तयोः कन्याहस्तं निक्षिप्य—

अष्टवर्षादियं कन्या पुत्रवत्पालिता मया ।
इदानीं तव पुत्राय दत्ता स्नेहेन पालय ॥

इति वदेत् । यत्र वृद्धाचारस्तत्कुर्यात् ग्रामप्रदक्षिणं कृत्वा गृहं प्रविशेत् ॥ २२ ॥

इति द्वाविंशः खण्डः ॥

## अथान्वारम्भणम्

अथान्वारम्भणीयास्तंत्रं प्रक्रमयन् पौर्णमास्यां प्रातरौपासनं हुत्वा प्राणानायम्य पार्वणस्थालीपाकप्रारम्भाधिकारसिध्यर्थं अन्वारम्भणस्थालीपाकं करिष्य इति संकल्प्य चरुंश्रपयित्वाग्नीन्धनाद्यग्निमुखान्ते स्रुवेणाज्यमादाय स्रुचि संपूर्य सरस्वत्यै स्वाहा, सरस्वते स्वाहा इति सारस्वतौ होमौ जुहुयात् । पूर्णा पश्चाद्यत्ते देवा अदधुरिति केचिदवदानधर्मेण अग्नये स्वाहाऽग्नाविष्णुभ्यांस्वाहा सरस्वत्यै स्वाहा सरस्वते स्वाहाग्नये भगिने स्वाहा अग्नये स्विष्टकृते स्वाहा इति षडाहुतीर्हुत्वा परिधिप्रहरणवर्जं जयादिब्रह्मविसर्जनान्ते पूर्णपात्रदक्षिणां दत्वा प्राणानायम्य पौर्णमास्येन स्थालीपाकेन श्वो यक्ष्य इति संकल्प्य अश्मा बर्हिषोत्सन्नहनं कृत्वा परेद्युः प्रतिपदस्थालीपाकं कुर्यात् । अमावास्यायामप्येवमन्वाधाय स्थालीपाकं कुर्यात् ॥ २३ ॥

इति त्रयोविंशः खण्डः ॥

## अथाग्रयणम्

शरद्याग्रयणं पर्वणि प्रातरौपासनं हुत्वा नवान्नप्राशनार्थं नवव्रीहिभिर्यवैराग्रयणस्थालीपाकं करिष्य इति संकल्प्य प्रत्यवरूढो नो हेमन्तः तत्रेन्द्राग्नी विश्वेदेवा द्यावापृथिवी च प्रधानदेवता, स्विष्टकृदङ्गदेवता, व्रीहिमयं चरु द्रव्यं, विद्युदसीत्यप उपस्पृश्य पार्वणवदग्निमुखान्ते एताभ्यो हुत्वा होमशेषं समाप्य आचम्योदनपिण्डं संवृत्य परमेष्ठ्यसि श्रियंगमयत्यन्तेनागारस्तूपविध्येत् । भद्रान्न श्रेयस्समनैष्ट देवा इति हुतशेषं प्राशयेत् ॥ २४ ॥

इति चतुर्विंशः खण्डः ॥

## अथ पुनस्संधानम्

अथ पुनस्संधानविधिं व्याख्यास्यामः आपस्तम्बानुसारेण, दम्पती स्नातौ भूत्वा होमलोपप्रायश्चित्तार्थं कृच्छ्राचरणं कृत्वा तद्धोमद्रव्याणि ब्राह्मणाय दत्वा श्रोत्रियागारादग्निमाहृत्य विधिवदग्निं प्रतिष्ठाप्य उपावरोहणं कृत्वा पत्नीं दक्षिणत उपवेश्य स्वयमुत्तरत आसीनः, प्राणानायम्य अनुगतस्यौपासनाग्नेः पुनस्संधानाख्यं कर्म करिष्य इति संकल्प्य अग्नींधनादिपात्रसादनकाले चर्व्याज्यस्थाल्यौ प्रोक्षणीस्रुवाविति, चत्वारि पात्राणि प्रयुज्य पवित्रकरणादिस्रुवसम्मार्जनान्तेऽग्निं

परिषिच्य चतुर्गृहीतेनाज्येन स्रुचं पूरयित्वा, अयाश्चसमस्तव्याहृतिहोमं हुत्वा चतुर्गृहीतेनाज्येन महाहविर्होता मनोज्योतिर्यदस्मिन्यज्ञे त्रयस्त्रिंशत्तंतु तन्वन्नुद्बुध्यस्वाग्न उदुत्तमयुद्वयं तमसस्पर्युद्दियं चित्रमग्नेऽभ्यावर्तिन्नग्ने अंगिरः पुनरूर्जासहरय्येति चतुर्दशाहुतीर्हुत्वा द्वादशगृहीतेनाज्येन स्रुचं पूरयित्वा सप्त ते अग्ने समिध इति सप्तवत्या पूर्णाहुतिं हुत्वा अग्निं परिषिच्य प्रातरौपासनं कुर्यात्। मासत्रया-दूर्ध्वं चेत्तस्मिन् तंतुमति स्थालीपाकं करिष्य इति संकल्प्य, तस्मिन्नग्नौ चरुं श्रपयित्वाग्नींधनादि अग्निमुखांते चरुमवदाय, अग्नये तन्तुमते स्वाहेति हुत्वा स्विष्टकृतं च परिधिग्रहणं समित्सन्नहनं जयादिब्रह्मविसर्जनांते प्रातरौपासनं कृत्वात्मसमारोपणं कुर्यात् ॥ २५ ॥

इति पञ्चविंशः खण्डः॥

## अथ वैश्वदेवम्

अथ वैश्वदेवं—चतुर्दशमहः पर्व भवतीति ज्ञात्वा व्रतोपक्रमः, दम्पत्योर्द्वादशाहमधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जं त्रयोदशेहन्युपवासश्च, चतुर्दशेहनि वैश्वदेवस्थालीपाकं कृत्वा, गृहपाकाद्ध-विष्यमादाय वैश्वदेवं करिष्य इति संकल्प्य, औपासने पचनेवाऽग्नये स्वाहेति षड्भिः प्रतिमन्त्रं हस्तेन जुहुयादुत्तरतः। तद्भस्मनि हविष्यमुभयतः परिषेचनं, बलिना तस्य तस्य देशे संस्कारो हस्तेन परिमृज्या-वोक्ष्य न्युप्य पश्चात्परिषेचनम्। एवमेवं बलीनां देशे देशे समवेतानां सकृत्सकृदन्ते परिषेचनम् सति सूपसंसृष्टे न कार्याः। अपरेणाग्निं सप्तमाष्टमाभ्यां उदगपवर्गमुदधानसंनिधौ नवमेन मध्येगारस्य दश-मैकादशाभ्यां प्रागपवर्गमुत्तरपूर्वदेशे अगारस्योत्तरैश्चतुर्भिः शय्यादेशे कामाय देहल्यामन्तरिक्षे लिङ्गे-नोत्तरेणापि धान्यामुत्तरे ब्रह्मसदने दक्षिणतः पितृलिङ्गेन, प्राचीनावीती, अवाचीनपाणिः कुर्यात्। रौद्र उत्तरतः यथादेवताभ्यः तयोर्नानापरिषेचनं धर्मभेदान्नक्तमेवोत्तमेन वैहायसं गृहादुपरि सायं चैत्रमपि वैश्वदेववैहायसौ सर्वान्नादग्रं दद्यात्। ततो देवयज्ञेन यक्ष्य इति संकल्प्य, विद्यु-दसीत्यप उपस्पृश्य अग्निं परिषिच्य, देवेभ्यः स्वाहेति हविष्यं हुत्वाग्निं परिषिच्य वृष्टिरसीत्यप उपस्पृश्य, एवं प्राचीनावीती पितृयज्ञं भूमौ हविष्येण पितृभ्यः स्वधास्तु इति कुर्यादप्रदक्षिणं परिषेचनम्। यज्ञोपवीती भूतयज्ञमिदं भूतेभ्यो नम इति कुर्यात्प्रदक्षिणं परिषेचनम्। एवं यज्ञोपवीती मनुष्ययज्ञं मनुष्येभ्यो हन्तेत्यतिथिं भोजयेदग्नौ वा ग्रासमात्रं दद्यात्। ब्रह्मयज्ञं तु पूर्वमेव कुर्वीत ॥ २६ ॥

इति षड्विंशः खण्डः॥

## अथ द्विभार्याग्निसंसर्गः

यदाग्नौ विद्यमाने यदि लौकिकेग्नौ द्वितीयविवाहहोमः स्यादग्निद्वयं पृथगुपासीता-संसर्गात्। विवाहहोमप्रभृत्येकादशदिने द्वादशदिने वा प्रातरौपासनं कृत्वाग्निद्वयं पृथक् स्थंडिले

स्थापयित्वा प्राणानायम्य गृह्याग्निसाध्यानां कर्मणां तत्रानुष्ठानसिध्यर्थं औपासनाग्निद्वयसंसर्गं करिष्य इति संकल्प्य, द्वितीयाया अग्नौ दर्व्याज्यस्थाल्यौ प्रोक्षणस्रुवाविति चत्वारि पात्राणि प्रयुज्य, पवित्रकरणादिस्रुक्स्रुवसंमार्जनान्ते अग्निं परिषिच्य द्वितीयायामन्वारब्धायां चतुर्गृहीतेनाज्येन नमस्त ऋषे गतेत्येकामाज्याहुतिं हुत्वाग्निं परिषिच्य अयं त इति मन्त्रेण तस्मिन्नग्नौ समिधं प्रताप्य तां समिधमाजुह्वान उद्बुध्यस्वेति द्वाभ्यां पूर्वभार्याया अग्नौ निधाय, तस्मिन्नग्नौ पूर्ववच्चतुष्पात्रप्रयोगं कृत्वाग्निं परिषिच्य पत्नीभ्यामन्वारब्धः सन् चतुर्गृहीतेनाज्येन यो ब्रह्मा ब्रह्मण उज्जभार इति घृतसूक्तेन यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादित्येताभ्यां (मन्त्राभ्यां) समस्तव्याहृतिहोमं चैकादशाज्याहुतीर्हुत्वा उत्तरं परिषिच्य, तस्मिन्नग्नौ चरुं श्रपयित्वाग्नींधनाद्यग्निमुखांते स्रुच्युपस्तीर्य, चरुं द्विरवदायाभिघार्य हविः प्रत्यभिघारयति। समितं संकल्पेथामिति पुरोनुवाक्यामनूच्याग्नेः पुरीष्येति याज्यया हुत्वा स्विष्टकृदर्थमन्नमवदायाभिघार्याग्नेः पश्चाद्बर्हिषि निधाय, स्रुवेणाज्यमादाय पुरीष्यस्त्वमग्न इत्यादि प्रतिमन्त्रमनुवाकशेषेण विंशतिमन्त्रैराज्याहुतीर्हुत्वा पूर्वावदत्तेन चरुणा स्विष्टकृतं हुत्वा समितसन्नहनं जयादींश्च हुत्वा बर्हिस्समञ्जनं कृत्वा परिधींश्च प्रहृत्य संस्रावप्रायश्चित्तादि ब्रह्मविसर्जनांतं कृत्वाऽग्न्यात्मारोपणं कुर्यात्। ततः परं यावज्जीवं संसृष्टाग्नावेवौपासनादि स्मार्तं कुयात्॥

अपिवा ज्येष्ठकनिष्ठभार्याग्नी दक्षिणोत्तरतश्च क्रमेण स्थापयित्वा द्वयोरप्यग्न्योः प्रातरौपासनं कृत्वा पत्नीभ्यां सहितः प्राणानायम्य भार्याग्निद्वयसंसर्गं करिष्य इति संकल्प्य अग्न्योर्मध्ये स्थंडिलोल्लेखनादि कृत्वा, भवतन्नस्समनसावाग्नावग्निश्चरति प्रविष्ट इति मन्त्राभ्यां प्रत्यक्षौपासनद्वयं स्थंडिले सकृदेव निक्षिपेत्। अनेन विधिना तस्मिन्नग्नौ चरुं श्रपयित्वाग्नीन्धनाद्यग्निमुखांते चरुणा चतुरवत्तेनाग्नये तन्तुमते स्वाहेति हुत्वा स्विष्टकृतं च हुत्वा समितसन्नहनं जयादिब्रह्मविसर्जनान्तं कृत्वात्मसमारोपणं कुर्यात्। ततो यावज्जीवं संसृष्टौपासनाग्नावेव सीमन्तादिक्रिया अपि कुर्यात्। यः कश्चित्पुरुषोग्निद्वयसंसर्गं न कुर्याच्चेत् नित्यमग्निं धार्य पृथक्पृथगौपासनं कुर्यात् इत्याह भगवान् बोधायनः॥ २७॥

इति सप्तविंशः खण्डः॥

## अथाग्निसंसर्गप्रायश्चित्तम्

यदि वैदिकाग्निर्लौकिकाग्निना संसृष्ट अयं त इति तस्मिन्नग्नौ समिधं प्रताप्य लौकिकाग्नौ प्रतिष्ठाप्य आजुह्वान उद्बुध्यस्वेति मन्त्राभ्यां लौकिकाग्नौ समिधं प्रक्षिप्य, लौकिकाग्निवैदिकाग्निसंसर्गप्रायश्चित्तं करिष्य इति संकल्प्य, तस्मिन्नग्नौ चरुं श्रपयित्वाग्नीन्धनाद्यग्नि-

मुखांतेऽग्नये विविचये स्वाहेति चरुं हुत्वा, स्विष्टकृतं च हुत्वा परिधिप्रहरणवर्जं जयादिब्रह्मविसर्जनांतं कृत्वात्मसमारोपणं कुर्यात्। एवं सर्वत्र प्रायश्चित्तस्थालीपाकेषु ॥ २८ ॥

इत्यष्टाविंशः खण्डः ॥

वैदिकद्वयसंसर्गश्चाग्निद्वयस्वामिनौ युगपत् द्वौ समिधौ अय त इति मंत्रेण प्रताप्य वाऽच्छागिर इति समिधो विभज्य लौकिकाग्निद्वयं प्रतिष्ठाप्य स्वां स्वां समिधं आजुह्वान उद्बुध्यस्वेति मंत्राभ्यामग्नौ प्रहृत्य, अयाश्चसमस्तव्याहृतिहोमं च हुत्वा तस्मिन्नग्नौ चरुं श्रपयित्वा पूर्वेहोताग्नये विविचये चरुं कुर्यात् ॥ २९ ॥

इत्येकोनत्रिंशः खण्डः ॥

गार्ह्याग्निद्वयसंसर्गश्चेदेवमेव प्रायश्चित्तं, पथिकृत्स्थाने अग्नये क्षामवते चरुं विशेषेण, शेषं समानम्। सूतिकाग्निना संसर्गश्चेदग्नये संकुसुकाय स्थालीपाकं कुर्यात्। वैद्युतेन संसर्गश्चेत् अग्नयेप्सुमते चरुं कुर्यात्। स्वाग्नौ यद्यन्यो यजेतान्याग्नौ स्वयं वा यजेताग्नावसंसृष्टे आग्नावैष्णवस्थालीपाकं कुर्यात्। अपिवा प्रायश्चित्तचरुस्थाने द्वादशगृहीतेनाज्येन स्रुचं पूरयित्वा सप्त ते अग्न इति सप्तवत्या पूर्णाहुतिं जुहुयात्। तद्देवतां चतुर्थ्यंतेन जुहुयात्। सा पूर्णाहुतिर्ब्रह्मचर्याग्निना संसर्गश्चेदग्नींधनादिस्रुक्स्रुवसंमार्जनांतमग्निं परिषिच्य चतुर्गृहीतेनाज्येन कामावकीर्ण इति द्वाभ्यामाहुती जुहुयात्। ब्रह्मचर्याग्निर्लौकिकाग्न्यादिना संसृष्टश्चेत्सर्वप्रायश्चित्तम्। प्रणीतापात्रस्कन्ने पुनः पूरयेत्। परिस्तरणदाहे पुनः परिस्तरणं परिधिदाहे पुनः परिधिं निक्षिपेत्। पवित्रनाशे पुनः पवित्रं कृत्वानुमृजेत्। होमकाले कर्त्रग्न्योर्मध्ये पक्षिशुनकाखुपुरुषगवादीनां गमने दर्व्यादिदाहे तामग्नौ प्रक्षिप्यान्यां पूर्ववत्संपादयेत्तेष्वन्येष्वपि निमित्तेषु सर्वप्रायश्चित्तं कुर्यात्। अग्निरेकदेशस्समस्तो वा यद्यायतनाद्बहिर्षद्त्रिंशदंगुलादर्वाक्कृते तमग्निं त्रिः परिक्रम्य पुनरायतने निक्षिप्य सर्वप्रायश्चित्तं कुर्यादेवमेव प्रक्षिप्याग्नये पथिकृते चरुं कुर्यात्। जातकर्मचौलोपनयनगर्भाधानादिकर्मांते तत्तत्कालेष्वसंभवे ब्रह्मचर्यव्रतलोपे च पाहित्रयोदशहोमं कृत्वा तत्तत्कर्म कुर्यात् ॥

श्लोकः— पुनरूर्जासहाद्यंते मध्ये पाहीति पञ्चकम्।
महाव्याहृतयश्चैव एते पाहित्रयोदश ॥ इति ॥

स्मार्ते भ्रष्टे वा सर्वप्रायश्चित्तं, कर्मांतरितकर्मविपर्यासे त्वन्नो अग्ने स त्वन्नो अग्न इति। स्वराक्षरादिलोपे आभिर्गीर्भिरिति, ऋत्विङ्मौढ्ये यद्विद्वांस इति, वाङ्नियमलोपे इदं विष्णुस्त्र्यंबकमिति, द्वाभ्यामभिनिर्मुक्तादिभिरग्निस्पर्शे यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादिति द्वाभ्यां

जुहुयात् । अग्नौ स्वयं प्रज्वलिते उद्दीप्यस्वेति द्वाभ्यां समिधावादध्यात् । अपि वापन्मा श्रीस्त्वाहेति पूर्वां श्रीर्मागात् स्वाहेत्यपरां, अग्नेः श्वशूद्रजलवासशुक्तारजस्वलामार्जारादिस्पर्शे पुनस्त्वा- दित्यादिसमिधमादध्यात् । सर्वत्र सर्वप्रायश्चित्तं च जुहोति । उपनयने भ्रष्टे भुवाहुतिं जुहुयात्त्रिभिः । हुतेऽग्नौ बोधासबोधीति द्वाभ्यां समिधावाधाय होमं कुर्यादनाज्ञातमिति तिस्रोनाज्ञाते जुहुयात् । होमात्पूर्वमशने यत्ते वयं यथाहुतद्वसव इति जुहुयात्समिधावादध्याज्जपेदाग्रयणात्यतिपत्तौ भूर्भुवस्सुवः स्वाहेति जुहुयात्कृत्वाग्रयणं नवस्यान्नमश्नीयात्सर्वप्रायश्चित्तपूर्वकमाग्रयणं शरदि कुर्यात् ॥ ३० ॥

इति त्रिंशः खण्डः ॥

## अथ हविर्दोषः

हविर्दोषं व्याख्यास्यामो यदैव तं किल मक्षिकालौतिकामत्कुणश्वेलशिरसो यूकः कीटो वा मर्कटो वाऽऽखुपुरीषवस्त्रैकदेशवागमृतनखनशींधुर्गण्डास्योदकासृङ्मौसिक मार्जारसंस्पृष्टा द्वाघमवर्णैर्वोपहृतं रजस्वलासंस्पृष्टं तथा प्रयते भ्रूणघ्नेन वा दृष्टं तथापः पात्रैर्मध्यदेशे वा स्कन्नं केशादिषु पतितेषु दुष्टं हविर्मात्रमुद्धृत्याप्सु प्रक्षिप्य शेषं हविरद्भिः प्रोक्ष्य आज्येनाप्लुत्य सर्वप्रायश्चित्तं कृत्वा यजेदवत्तदुष्टं चेत्तदप्सु त्यक्त्वा पुनरेव जुहुयादनवत्तं सर्वं दुष्टं चेत्तदप्सु त्यक्त्वा प्रधानदेवतायागे तत्प्रधानदेवतार्थं चरुश्रपणं कृत्वा शेषदेवता यजेत् । हविर्दग्धं चेत्सर्वप्रायश्चित्तं कृत्वा दग्धं परित्यज्य शेषेण यजेत् । सर्वं दग्धं चेदपोभ्यवहृत्य पुनरुत्पाद्य जुहुयात् । प्रधानहोमे जुहुयात् । हविषि दुष्टे स्विष्टकृदाज्येन समापयेदवत्तमनवत्तं हविर्यस्कन्देऽस्कान्द्यौरिति द्वाभ्यां जुहुयाद्धूयमाने स्कन्न एवमेव प्रायश्चित्तं च हुत्वा तदेव जुहुयात् । देवतामन्त्रहविःकर्मविपर्यासे त्वन्नो अग्ने स त्वन्नो अग्न इति द्वाभ्यां जुहुयात् औपासने । स्विष्टकृल्लोपे कर्मसमाप्तौ सर्वप्रायश्चित्तं प्रधानलोपे कर्मसमाप्तेप्यङ्गं तत्पुनः कुर्यादंगलोपे न पुनःकरणम् । आज्यं दुष्टं चेदन्तःपरिधि निनीयान्यमाज्यं गृहीत्वोत्पूय जुहुयात् । स्थालीपाकदिने संकल्पात्पूर्वं पत्नी रजस्वला चेत् पञ्चमदिवसे सर्वप्रायश्चित्तपूर्वकं स्थालीपाकं कुर्यात् । अपार्वणे द्वितीयां चतुर्थीं नवमीं चतुर्दशीं च विहाय कुर्यात् । अनुक्तेषु प्रायश्चित्तेषु सर्वप्रायश्चित्तं समुच्चयेत्येके ॥ ३१ ॥

## अथाग्निनाशः

अथाग्निनाशे विवाहहोमादूर्ध्वं नित्यहोमात्पूर्वं अग्न्यनुगते खेनस इत्यादि लाजहोमान्तं पुनः कृत्वा नित्यहोमं कुर्यात् । विवाहहोमादूर्ध्वं प्रवेशहोमात्पूर्वं द्वादशदिनान्तरिते कन्यावरणादि लाजहोमान्तं पुनः कृत्वा प्रवेशहोमं कुर्यात् ॥

इत्येकत्रिंशः खण्डः ॥

## अथाग्निनष्टप्रायश्चित्तम्

नित्यहोमोपक्रमादूर्ध्वं शेषहोमात्पूर्वं उपनयनहोमादूर्ध्वं त्रिरात्रात्पूर्वं जातकर्मण ऊर्ध्वं दशरात्रात्पूर्वं अग्न्यनुगततत्तदग्निनष्टप्रायश्चित्तं करिष्य इति संकल्प्य, शन्नो देवीरिति भस्माद्भिरवोक्ष्य अयं त इति भस्मस्पर्शं कुर्वन् समिध्यारोप्य लौकिकाग्निं प्रतिष्ठाप्य, आजुह्वान उद्बुध्यस्वेतिमन्त्राभ्यां तामकसीं प्रक्षिप्य, गोमूल्यं दत्वाग्नींधनादिस्रुक्स्रुवसंमार्जनांतेऽग्निं परिषिच्य, चतुर्गृहीतेनाज्येन अग्निरग्निहोता ब्राह्मण एकहोता दश मनोज्योतिर्यन्म आत्मनो मिन्दाभूत् पुनरग्निश्चक्षुरदात् महाव्याहृतयोऽनाज्ञातत्रयं व्याहृतयः प्रणवाधिकमुदुत्तमं इमं मे वरुण तत्वायामि त्रयस्त्रिंशत्तंतु तन्वन्नुद्बुध्यस्वाग्ने भूर्भुवस्सुवस्वाहेत्येतैस्त्रयस्त्रिंशदाज्याहुतीर्हुत्वा तन्त्रशेषं समापयेत् । यदि औपासनेग्नौ विद्यमाने ह्यकृतहोमेऽष्टाभ्यः होमकालेभ्यः पूर्वं सर्वप्रायश्चित्तपूर्वकमतीतहोमं कृत्वा तत्कालहोमं कुर्यात् । ऊर्ध्वं चेत्पुनराधानं, समारोपिते कालद्वयमेवाग्नेयस्थालीपाकादूर्ध्वं पौर्णमास्यतिक्रमे विश्रेष्टिं कुर्यात् । पौर्णमास्याः प्रातरौपासनं कृत्वा पौर्णमास्यां कर्तव्यप्रथमचरोरतिक्रमनिमित्ते विश्रेष्टिं करिष्य इति संकल्प्य, पत्न्यवहन्ति चरुꣳ श्रपयित्वाग्निमुखांते अग्नये स्वाहा इन्द्राय स्वाहा सोमाय स्वाहा अग्नये स्विष्टकृते स्वाहेति चरुणा हुत्वा परिधिप्रहरणवर्जं समित्सन्नहनं जयादिप्रणवविसर्जनांतं कृत्वान्वारम्भणीयां कुर्यात् । पौर्णमासोपक्रमादूर्ध्वं दर्शातिपत्तावेवमेव विश्रेष्टिंस्थालीपाकं कुर्यात् । प्रायश्चित्तेष्टिस्थाने पूर्णाहुतिं वा । स्थालीपाकचतुष्टयलोपे पुनराधानं, धार्यमाणश्चेदष्टौ होमकाले पत्नीयजमानयोरसन्निधावग्निर्लौकिको भवति । शक्तश्चेदग्निर्धार्योऽशक्तश्चेदात्मनि समारोपयेत् ॥

इति द्वात्रिंशः खण्डः ॥

## अथार्कविवाहः

अथार्कविवाहः — तृतीयविवाहे प्राप्तेऽर्ककन्यां विवहेन्न मानुषीं कन्यां वरयेत् । आदित्यदिवसे हस्तर्क्षे वा पूर्वाह्णे स्नात्वालंकृतस्सन् ग्रामात्प्रागुदीच्यां वा अपुष्पफलसंयुतमेकशाखमर्कगुल्मं प्राप्तस्तत्प्रदानार्थमाचार्यं परिकल्प्य स्वस्ति वाचयित्वा हिरण्येनाभ्युदयं कुर्यात् । तथाचार्यो वरं मधुपर्केण संपूजयेत् वस्त्राभरणैरर्कमलंकृत्याथ वरः सूर्यं प्रार्थयेत् ॥

त्रिलोकवासिन् सप्ताश्व छायया सहितो रवे ।<br>
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥

इत्यर्कगुल्मे छायासहितं रविमावाह्य तन्मन्त्रेण षोडशोपचारैस्संपूज्य प्रदक्षिणीकृत्यार्कं प्रार्थयेत् ॥

नमस्ते मङ्गले देवि नमस्सवितुरात्मजे ।
त्राहि मां कृपया देवि प्रतित्वं मयि गाहताम् ॥

इति अर्ककन्यां प्रार्थयेत् । ततो वरस्वगोत्रादिकं स्वयं प्रोच्य, काश्यपगोत्रस्य कर्मसाक्षिणो नप्त्रीं, सवितुः पौत्रीं, आदित्यस्य पुत्रीं इमां कन्यां वृणीमहे इति वदेत् । केचिद्वरणं नेच्छन्ति । यथाशक्ति दक्षिणादानं कृत्वा सुमुहूर्ते निरीक्षेत । स्वस्तिसूक्तं जपन्नाचार्यस्तां दद्यात् ॥

अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम् ।
श्रीविष्णुशर्मणे तुभ्यं दत्तां विप्रां समाश्रय ॥ इति ॥

अथ वरस्तूर्णी माङ्गल्यसूत्रं स्वर्णसंयुक्तं स्कन्धदेशे बध्वा अर्कस्याष्टदिक्षु जलपूरितकुम्भान्निधाय, त्रिसूत्रैर्वेष्टयित्वा संवेष्ट्य सर्वेषु कुम्भेषु प्राणप्रतिष्ठां कृत्वा, पुण्डरीकाक्षं ध्यात्वा उदवाहनादिषोडशोपचारान्नैवेद्यान्तं कृत्वा, ततोऽर्कस्य उत्तरदेशेऽर्कं समन्वारभ्यार्कविवाहाङ्गहोमं करिष्य इति संकल्प्य, अग्निप्रतिष्ठापनादि आज्यभागान्तं कृत्वा, बृहस्पते सवितुः अग्निं दूतं सूर्यादिरग्निं वायुं सूर्यं प्रजापतिं चाज्येन हुत्वा, सोमाय जनिविदे इत्यादि स्विष्टकृदन्तं जयादिप्रायश्चित्तविसर्जनान्तं कृत्वार्कं प्रदक्षिणीकृत्य मन्त्रमेतमुदाहरेत् ॥

मया कृतमिदं कर्म स्थावरेण जरायुणा ।
अपत्यकानि नो देहि सर्वं त्वं क्षन्तुमर्हसि ॥

इति शान्तिसूक्तं जपित्वार्कं विसृज्य शक्तितो गोकुम्भमाचार्याय दद्यात् । विप्रेभ्यश्च दक्षिणामलङ्करणादिकं ब्रह्मणे च दत्वाग्निं विसृज्य मानुषीं कन्यां विवाहयेत् । पुत्रपौत्रवान् भवति ॥

इति त्रयस्त्रिंशः खण्डः ॥

## अथ सर्पबलिः

(अथातः सर्पबलिं व्याख्यास्यामः ।) श्रावण्यां पौर्णमास्यामस्तमिते आदित्ये सायमौपासनं कृत्वा, पत्न्या सह प्राणानायम्य सर्पबलिमारप्स्ये तेन यावज्जीवं यक्ष्य इति पुनः प्राणानायम्य, सर्पबलिमारभमाणः श्रावणस्थालीपाकेन यक्ष्य इति संकल्प्य, चरुं श्रपयित्वाग्नीन्धनादिपात्रप्रयोगकाले पालाशपुष्पाणि तिस्र आरग्वधमय्यस्समिधस्सक्तूनखंडिततण्डुलैः कृतान् धानान् लाजानाञ्जनाभ्यञ्जने स्थगरमुशीरमुदकुम्भं च सादयेत् । पवित्रकरणादिस्रुक्स्रुवसंमार्जनान्तेञ्जलिसंस्कारः । ब्रह्म (वरणं) कुर्यादिध्ममादायेत्यग्निमुखान्तेऽवदानधर्मेण चरुमवदाय श्रावण्यै पौर्णमास्यै स्वाहेति हुत्वाऽथ ब्रह्मणावदानधर्मेणाक्तं पलाशपुष्पाणि जम्भो मशक इत्यादिभिस्तिसृभिः प्रतिमन्त्रं लाज-

होमवदञ्जलिना जुहोति । त्रयाणां सर्पा देवताः । इन्द्र जहि दन्दशूकमिति तिसृभिः प्रतिमन्त्रं आर्द्रवंशमयीस्समिध (आदधाति ।) आद्यस्येन्द्रो देवता, इतरयोरग्निः, तत्संख्यमिति प्रतिमन्त्रं चतस्र आज्याहुतीर्हुत्वा, आद्यस्य सर्पराजायेदमितरेषां सर्पेभ्य इति त्यागः । जयादिर्यद्स्य कर्मण इत्यन्ते पलाशपुष्पैश्च सहावदाय स्विष्टकृतं च हुत्वा समित्सन्नहनं परिध्यञ्जनादिसञ्जनेऽञ्जलैर्वा सम्मार्जनं ब्रह्मा कुर्यात् । परिधिप्रहरणादिब्रह्मविसर्जनान्ते प्राणानायम्य सर्पेभ्यो बलिं हरिष्यामीति संकल्प्य, वाग्यतस्सक्त्वादिसंभारानादाय गृहात् प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य स्थण्डिलं कल्पयित्वा, तत्र प्राचीरुदक्संस्थास्तिस्रो रेखा लिखित्वाऽद्भिरुपनिर्नीय तासु षट्सु रेखासु लेखनक्रमेण नमो अस्तु सर्पेभ्यो ये पार्थिवास इत्यादिकबलिं हरिष्यामीत्यन्तया सक्तु निवपति । सकृदेव मन्त्रो न च स्वाहाकारस्तूष्णीं सपुष्टान् धानान् लाजानाञ्जनाभ्यञ्जने स्थमरमुशीरं च षड्द्रव्याणि तूष्णीं (तासु) रेखास्वेव निवपति । सर्पेभ्य इति त्यागः । तक्षकवैशालेयेत्यादिभिः पञ्चभिः समीची नामासीत्यादिभिः षड्भिः हेतयो नामस्थेत्यादिषड्भिरेतैस्सप्तदशमन्त्रैर्बलिदेवतामुपस्थाय, रेखा अद्भिः परिषिच्य अप्रतीक्षस्तूष्णीं गृहमेत्य, अपश्वेतपदाजहीति द्वाभ्यामुदकुम्भेन त्रिः प्रदक्षिणं बहिरन्तरतोगारं निवेशं वा परिषिच्य, ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा, बलिहरणशिष्टधानान् कुमारान्प्राशयेत् । एवमत ऊर्ध्वं वाग्यतस्सक्त्वादायेत्याद्यप्रतीक्षस्तूष्णीं गृहमेत्य एवदन्तं अहरहस्सायङ्काले बलिं हरेत् । अदर्शनीयान्यबलिं हरेत् । (एवं) सायं प्रातश्च कुर्यादित्येके ॥

## सर्पबल्युत्सर्गः

मार्गशीर्षपौर्णमास्यामस्तमित आदित्ये सायमौपासनं कृत्वा सर्पबल्युत्सर्जनेन्यमार्गशीर्षस्थालीपाकेन यक्ष्य इति संकल्प्य, पत्न्यवहंतीत्यादि चरुश्रपणाद्याज्यभागान्ते मार्गशीर्ष्यै पौर्णमास्यै स्वाहेति चरुहोमः, हर्षमिति बलिमन्त्रस्य सन्नाम इति शेषं पूर्ववत् कृत्वात्र सर्पबलिमुत्सृजेत् । एतत्कर्म प्रतिसंवत्सरं कुर्यात् ॥

इति चतुस्त्रिंशः खण्डः ॥

## अथ ईशानबलिः

अथ ईशानबलिरुदगयन आपूर्यमाणपक्षे प्रातरौपासनं कृत्वा पत्न्या सह प्राणानायम्य ईशानबलिकर्म करिष्य इति संकल्प्य, होमबल्यादिभिः पर्याप्तं पार्वणवदौपासने चरुं श्रपयित्वा अभिघारणान्तं करोति । लौकिकेग्नौ क्षेत्रपत्यं श्रपयति । यथोपयोगं संभारानादाय ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य अग्निं कुट्यादिस्थण्डिलं कल्पयित्वा, यत्र क्वचेति विधिना औपासनाग्निं प्रतिष्ठाप्याऽग्नेरुपसमाधानाद्यग्निमुखान्तेऽपरेणाग्निं द्वे कुटी प्राग्द्वारे उदगपवर्गे कृत्वाऽऽत्वावहंत्विति

दक्षिणस्यां कुट्यामीशानमावाहयेत्। उत्तरस्यां कुट्यामायाहि मीढुषीत्यीशानस्य पत्नीं कुट्योर्मध्ये आयाहि जयन्तेति जयन्तमावाह्य, आवाहनक्रमेणासनादिदीपान्तं प्रत्येकं स्वैस्स्वैर्नामभिर्नमोन्तं प्रदद्यात्। ऐशानस्थालीपाकादुद्धृत्येशानमीढुषीजयन्तेभ्यो होमबल्यर्थं त्रीनोदनान् त्रिषु पात्रेषु कल्पयति। स्थाल्यां च ब्राह्मणभोजनार्थं भूयांसमोदनं विशिनष्टि। तानेवौदनान् अग्निसमीपमानीय अपरेणाग्निं प्रतिष्ठाप्य उपस्पृशतु मीढुषीति त्रिभिर्मन्त्रैर्यथादेवतमुपस्पृशत अग्निसमीपे स्वकीयागारे स्थापयति। यथैषां धूमः प्राप्नुयादेशानादोदनादवदानधर्मेणावदाय, भवाय देवाय स्वाहेत्यष्टाभिरीशानस्य मीढुषोदनाद्भवस्य देवस्य पत्न्यै स्वाहेत्यष्टाभिः मीढुष्याः जयन्तौदनाज्जयन्ताय स्वाहेति जुहुयात्। त्रिभ्य ओदनेभ्यस्समवदायाग्नये स्विष्टकृते सुहुत इति स्वाहान्तेन स्विष्टकृतं जुहोति। स्वस्ति नः पूर्णमुखः परिक्रामदित्यग्निमीशानं वोपतिष्ठेत, न जयादयः। समित्सन्नहनं बर्हिस्सम्मार्जनं परिधिप्रहरणमित्यादि ब्रह्मविसर्जनान्तं कृत्वा यथास्वमोदनेभ्यो याज्ञिकेषु पर्णेषु आदाय, तान्योदनसहितपर्णानि ग्रहपोपस्पृशत इति दक्षिणस्यां विचिन्वन्त इत्युत्तरस्यां अपित्वन्त इति मध्ये समश्नन्त इति दक्षिणस्यां एतत्पर्यन्तं द्वे द्वे पर्णे ततो दक्षिणस्यामेव देवसेना उपस्पृशतेति दश पर्णानि वा आख्यात इति दशपर्णानि अपोपस्पृशेति द्वे पर्णे तत उत्तरस्यां द्वाराप्युपस्पृशेति द्वे पर्णे अन्वासारिण इति मध्ये द्वे पर्णे निषङ्गिण उपस्पृशेति दक्षिणस्यां द्वे पर्णे एवं सहौदनपर्णबलीन् दत्वा होमबलिशेषेभ्यस्त्रिभ्य ओदनेभ्यः पिण्डं कृत्वा, नमो निषङ्गिण इषुधिमत इति कस्मिंश्चित् शिक्ये निधाय वृक्षे कृत्वा लम्बयति। अत्र नमस्ते रुद्र मन्यव इत्यादि तं वो जंभे दधामीत्यन्तं अनुषङ्गेण जपेत्। प्रथमोत्तमोनुवाकेन वा दर्भमुष्टिना च मिश्रितोदकैरग्रे वृषभमवोक्ष्य विसृजेत्। पश्चाद्गां चावोक्ष्य प्रस्थितानां गवां मार्गे भूमौ आत्वावहन्त्विति क्षेत्रपतिमावाह्य वस्त्रान्तं संपूज्य, चत्वारि सप्तपर्णानि भूमौ स्थापयित्वा तेषु क्षेत्रपत्यस्थालीपाकादोदनमादाय, क्षेत्रस्य पतये स्वाहेति मन्त्रावृत्या बलिं दत्वा, गन्धादिभिस्संपूज्य क्षेत्रस्य पतिना वयमिति द्वाभ्यामुपतिष्ठते। ईशानस्थालीपाकं ब्राह्मणान् भोजयेत्। क्षेत्रपत्यं सपिण्डादयः प्राश्नन्त्येतत्कर्म प्रतिसंवत्सरं कुर्यात्॥ इति ईशानबलिः॥ ३५॥

इति पञ्चत्रिंशः खण्डः॥

---

## अथ वास्तुपरीक्षा

अथ वास्तु परीक्षेत; बाह्यैरांतरैश्च लक्षणैरनूषरस्थलमविवादास्पदमोषधिवनस्पतियुक्तं, यस्मिन् कुशवीरणं प्रभूतं तत्र वास्तु कार्यं; कंटकक्षीरिणोपामार्गसालास्तिल्व इति चैतानन्यो(वा)न्या वा समूलान् परिघायेद्वास्य सर्वासु दिक्षु समं चतुरश्रं दीर्घचतुरश्रं वा भूमिं निर्माय, तस्यां नैर्ऋत्यां दिशि खनित्रादिना निम्नस्तामुद्धृत्य पांसूनुत्पाद्य पालाशमय्या खनित्रेण वा पांसून् गृहीत्वा यद्भूमेरिति देशान्तरं प्रासयेदेवं त्रिः । एवं निर्माणभूमिं स्योना पृथिवीत्यभिमृश्य स्थाणूनां निखातार्थं कर्मकरैः प्रदक्षिणं खानयित्वा तान्पांसून् गृहाभ्यन्तरे प्रास्य, निष्क्रमणार्थमिहैव तिष्ठ निमितेति द्वाभ्यां दक्षिणां द्वारस्थूणामवतं विधाय, एवं सव्यां द्वारस्थूणामवदधाति । इतरस्थूणाः खननक्रमेण तूष्णीमवटेष्ववधाय वंशस्थूपं स्थूणास्वीयमानमृतेन स्थूणाविति यजुषाभिमंत्रयते । ब्रह्म च ते क्षत्रं चेत्येताभिः यथालिंगं धर्मस्थे स्थूणाराज इति मध्यमं स्थूणाराजं श्रीस्थि स्थूप इति षष्टिवंशमेवं सम्यक्छन्नयादीनां गृहान्निर्माय कुड्यादिलेपनं कृत्वा, शुभदिने गृहप्रवेशं कुर्यात् । पालाशकाष्ठानि शमीमयकाष्ठानि वौपासनाग्नावाधाय, उध्रियमाणमिति मंत्रेण तमुद्धृत्य, अह्ना यदेनः कृतमस्ति पापं इति, रात्रौ रात्र्या यदेनः कृतमस्ति पापमिति । अह्ना इन्द्रस्य गृहा वसुमन्त इति यजुषा तमग्निं लवणोदकुंभादिगृहोपकरणै(र्यजमानो ब्राह्मणान्वितस्सपुत्रदारस्तूर्यघोषेण) स्वस्वागारं प्रपद्य, (पादौ प्रक्षाल्य आचम्य गृहमध्ये धान्यस्योपरि कलशं संस्थाप्य) उत्तरपूर्वदेशे विधिवत्स्थंडिलं कृत्वाऽमृताहुतिमिति स्थंडिलेऽग्निं प्रतिष्ठाप्य स्वस्तिवाचनाद्यभ्युदयिके कृत्वा प्रतिष्ठितमग्नेर्दक्षिणत उदधानायतनं भवति । तत्र विषूचीनाग्रान्दर्भान् आस्तीर्य तेषु दर्भेष्वन्नपतेऽन्नस्य नो देहीति(मंत्रेण)व्रीहियवान्सहैवान्युप्य, तत्रोदधानं प्रतिष्ठाप्य तस्मिन्नुदधाने अरिष्टा अस्माकमिति यजुषा चतुर उदकुंभानानयति । प्रतिकुम्भं मन्त्रावृत्तिस्स्याद्भूमिर्भूमिमगादित्येतयानुमंत्रयते । पत्न्या सह प्राणानायम्य वास्तुहोमं करिष्य इति संकल्प्य, अग्नेरिन्धनादिपात्रप्रयोगकाले सक्तूनुदकुम्भं च सादयित्वा आज्यभागान्ते वास्तोष्पत इति द्वे, वास्तोष्पते शग्मया इति द्वे, चतस्र आज्याहुतीर्हुत्वा, समिस्सन्नहनं जयादिपरिधिप्रहरणं ब्रह्मविसर्जनान्ते उदकुंभमादाय शिवं शिवमिति त्रिः प्रदक्षिणमंतरतोगारं निवेशनं च परिषिच्य सक्तून् ब्राह्मणेभ्यो दत्वा अपूपादियुक्तान्नेन ब्राह्मणान् भोजयेत् । विशीर्णगृहं पुराणगृहं वा नवीकृत्यैवमेव गृहप्रवेशादिकं कुर्यात् (नवीन गृहं चेत् नवग्रहमखवास्तुशान्तिपूर्वकं वृषवास्तुस्थापनपूर्वकं गृहप्रवेशादिकं कुर्यात्) ॥

इति वास्तुपरीक्षा

इति षट्त्रिंशः खण्डः ॥

इति वेङ्कटेश सिंगयभट्टसूरिविरचितायां आपस्तम्बस्मार्तप्रयोगदीपिकायां पूर्वभागः ॥

श्रीवेंकटेशाय मङ्गलम् ॥

## अथ उत्तरभागः

## अथ सर्वश्राद्धम्

अथ सर्वश्राद्धप्रकृतिभूतं दर्शश्राद्धं (व्याख्यास्यामः)। पूर्वेद्युः सायमौपासनं कृत्वा श्वो भविता तत्र भवद्भिर्दीयतां क्षण इति सद्यो वा निमंत्रणं; तस्यां रात्र्यां कर्ता भोक्तारश्च नियता भवेयुः । परेद्युः स्नात्वा गोमयेनोपलिप्ते पाकस्थाने तिलान्विकीर्य शुद्धपात्रे(षु) अन्नादिकं भार्यादिभिः कारयित्वा, सङ्गवातीते निमन्त्रितेभ्यः तैलमुद्वर्तनं कुर्यात् । आमलोदकस्नातानाहूय, औपासनाग्निमुपसमाधाय आचान्तान्ब्राह्मणानुपवेश्य पवित्रपाणिस्सन् कुशयवतिलहिरण्यहस्तः समस्तसंपत्समवाप्तिहेतवः इत्यादि अच्युतं पदमित्यन्तेन ब्राह्मणान् त्रिः प्रदक्षिणीकृत्य तिलाक्षताहिरण्यदर्भान् भूमौ निक्षिप्य, नमो ब्रह्मण्यदेवाय + नमो नम इति यावतीर्वै देवता इति द्वाभ्यां (ब्राह्मणान्) प्रणम्य दक्षिणां दत्वा प्राचीनावीती पितुरमावास्यान्नश्राद्धं कर्तुं ममाधिकारसंपदस्त्विति वदेत् । अधिकारसंपदस्त्विति प्रत्युक्तः सव्येन प्राणानायम्य देशकालौ संकीर्त्य प्राचीनावीती पितुरमावास्यान्नश्राद्धे पितृपितामहप्रपितामहानां ... गोत्राणां ... शर्मणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानां मातामहमातुःपितामह मातुः प्रपितामहानां ... गोत्राणां ... शर्मणां वसुरुद्रादित्यस्वरूपाणां (सपत्नीकानां), उपवीती, पुरूरवार्द्रवसंज्ञिकानां विश्वेषां देवानां श्राद्धसंरक्षक श्रीमहाविष्णोश्च, पितुरमावास्यान्नश्राद्धं अन्नेन हविषा पार्वणविधानेन युष्मदनुज्ञया सदैवं श्राद्धमन्नादिद्रव्येणाद्य करिष्य इति सङ्कल्प्य हस्तोदकं दद्यात् । सर्वत्र पित्रादिशब्दात्पूर्वमस्मच्छब्दमुच्चरेत् । सर्वत्र पित्र्यं कर्म प्राचीनावीती अप्रदक्षिणम् । सव्यं जान्वाच्य प्राग्दक्षिणाभिमुखं कुर्यात् । यज्ञोपवीत्युदङ्मुखो दक्षिणं जान्वाच्य प्रदक्षिणं चैवम् । *स्वागते स्वस्तिवचनेन्नपरिवेषणेभिवादने गोत्रवृद्धौ गन्धदाने दक्षिणादाने अग्नौकरणहोमे अनुव्रजने प्रदक्षिणे प्राणायामे नमस्कारे (गायत्री प्रोक्षणे) प्राशने अभिश्रवणे विसर्जने चोपवीतमेव ॥

इति सप्तत्रिंशः खण्डः ॥

---

*यल्लाजीये च :—

स्वागते स्वस्तिवचने दक्षिणायां प्रदक्षिणे ।
गोत्रस्य वादने चाग्नौ षट्स्वेतेषूपवीतिकः ॥

## अथाष्टत्रिंशः खण्डः

पुरूरवार्द्रवसंज्ञिकानां विश्वेषां देवानां स्थाने आहवनीयार्थे क्षणं दत्वा भवद्भिः क्षणः प्रसादः करणीयः, इति द्वौ विप्रौ निमन्त्र्य, प्राचीनावीती पितुर्गोत्रस्य शर्मणः वसुरूपस्याहवनीयार्थे क्षणं इत्यादितत्संबन्धगोत्रनामरूपविशेषेण एकैकस्य त्रींस्त्रीन्निमंत्र्य — अशक्तो विश्वदेवार्थमेकं वर्गद्वयस्याप्येकं विष्णवर्थमेकम्। —

अक्रोधनैश्शौचपरैः सततं ब्रह्मवादिभिः।
भवितव्यं भवद्भिश्च मया च श्राद्धकर्मणि ॥

इत्युक्त्वा। पूर्वाङ्गणे गोमयांभसा चतुरश्रमंडलं परितः प्रादेशमात्रं देवतार्थे कुर्यात्। दक्षिणतः पित्रर्थं ( वर्तुलं ) तयोर्मध्ये षडङ्गुलाव(का)शं कृत्वा; गन्धयवदर्भान्विन्यस्य, पितृमण्डले गन्धतिल-दर्भान्प्रास्य, मण्डलात्पुरतः पश्चिमाभिमुख उपविश्य, पश्चिमतः प्राङ्मुखोपविष्टानां पादौ प्रक्षाळयेत्। विश्वेदेवार्थब्राह्मणौ सम्बुध्या स्वागतं पृच्छेत् ॥

सङ्कल्पासनयोष्षष्ठी द्वितीयावाहने तथा।
अन्नदाने चतुर्थी स्याच्छेषास्सम्बुद्धयः स्मृताः ॥ इति ॥

विश्वेदेवा इदं वः पाद्यं इति देवतीर्थेन पाद्यं दत्वा, शन्नो देवीरिति चतुरश्रमण्डलोपरि क्षाळयेत्, गोमयसहितेनाज्येन पादलेपनं कुर्यात्। एवं द्वितीयमण्डले पित्रादीन्स्वागतं पृष्ट्वा सम्बन्धगोत्रनामरूपैः पृथक्पात्रं पितृतीर्थेन दत्वा पूर्ववत्प्रक्षाळयेत् न गुल्फात्परम्। पितृपादोदकं शिरसि न धारयेत्। दैवपितृपादोदकद्वयसंसर्गं न कुर्यात्। विष्णोश्चतुरश्रमण्डले (देवतीर्थेन)। ईशान्यां (दिशि), (स्व) पादौ प्रक्षाल्याचम्य – देवतार्थब्राह्मणमण्डलात्प्राच्यामाचामेत्। पित्रर्थो उदीच्याम् ॥

(मण्डलात्पुरतो देवाः पितरश्चोत्तरे तथा।
कर्ताऽऽचामेत्तदीशान्यां परं कर्तुर्द्विजस्तथा ॥)

आदावन्ते च पाद्ये च विष्टरे च विशेषतः।
विकिरे प्राशने चैव षट्स्वाचमनं स्मृतम् ॥ इति ॥

इत्यष्टत्रिंशः खण्डः ॥

---

## अथैकोनचत्वारिंशः खण्डः

अथोक्ता विश्वेदेवा भूर्भुवस्सुवः स्वाहास्तामयं वो विष्टर इति दक्षिणपार्श्वे विष्टरं दत्वा, दक्षिणपाणिना ब्राह्मणमुपसंगृह्य विष्टरे प्राङ्मुखं उपवेशयेदेवं द्वितीयं पितः भूर्भुवस्वः स्वधास्तामित्यादि वामपार्श्वे विष्टरान्दत्वा पूर्ववदुदङ्मुखान्प्रागपवर्गानुपवेश्य, दैववत्प्राङ्मुखं वा प्रत्यङ्मुखं वा विष्ण्वर्थे- ब्राह्मणमुपवेश्य आचामेत् । यत्राऽचमनं तत्र पवित्रं विसृज्य पुनः पवित्रं धारयेत् । वर्तमान- मुक्त्वा प्रकृतश्राद्धे भवदनुज्ञया प्रक्रान्तं श्राद्धकर्म करिष्य इति (उक्त्वा) कुरुष्वेत्यनुज्ञातः

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः ॥

इति संप्रार्थ्य अपहता असुरा रक्षाꣳसि पिशाचाः ये क्षयन्ति पृथिवीमनु इति द्वार- देशेषु श्राद्धभूमौ च तिलानवकीर्य पितृणां पुरतो भूशुद्धिं कृत्वा, उदीरतामवर इति तिलाद्भिरवोक्ष्य । देवपुरस्ताद्भूशुद्धिं कृत्वा, तूष्णीमेताभिरद्भिरवोक्ष्य, अन्नं गायत्र्या प्रोक्ष्य अपवित्रः पवित्रो वा- शुचिरिति सदर्भयवोदकेन पाकादीन्प्रोक्ष्य श्राद्धार्थं संपादिताः पदार्थाः देशतः कालतश्च श्राद्धयोग्या भवन्त्विति भवंतो ब्रुवंत्विति प्रार्थयेत् । (तेऽपि) श्राद्धयोग्या भवंत्विति ब्रूयुः । श्राद्धकाले गयां ध्यात्वा ... प्रवर्तये इति वदेत् । प्रवर्तयेत्यनुज्ञातो दैवार्थं ब्राह्मणयोः हस्ते अपो दत्वा युग्मान् ऋजून्प्रागग्रान् दर्भान् विश्वेषां देवानामिदमिदमासनमित्येकैकस्यासनार्थं दक्षिणतः प्रदाय, अपो दद्यात् । एवं सर्वोपचारेष्वाद्यन्तयोरपो दद्यात् । दैवे क्षणः क्रियतामिति पुनर्निमन्त्रयेत् । ओं तथेति प्रतिवचनं, प्राप्नुवंतु भवंत इति कर्ता, प्राप्नवाम इति प्रतिवचनम् ॥

अथ कर्ता अभ्युक्षितायां भुवि प्रागग्रदर्भेषूदगपवर्गं पात्रद्वयमेकं वा न्यग्बिलमासाद्योत्तान- यित्वा, प्रोक्ष्य प्रागग्रयुग्मदर्भानंतर्धाय अप आसिच्य, शन्नोदेवीरिति पात्रयुग्मं सकृदभिमन्त्र्य विश्वेभ्यो देवेभ्यो वो जुष्टं गृह्णामि इत्यप्योदकमालोड्य,

यवोसि धान्यराजो वा वारुणो मधुसंयुतः ।
निर्णोदस्सर्वपापानां पवित्रमृषिभिस्स्मृतम् ॥

इति मंत्रावृत्या प्रतिपात्रं यवानोप्य, अर्घ्यपात्रयोरमी गन्धाः, इमे अक्षताः, इमानि श्रीतुळसी- दर्भाग्राणि चेत्येतानि प्रक्षिप्य देवपात्रे सम्पन्ने इत्यभिमृशेत, सुसंपन्ने इति प्रत्युक्तः, विश्वान् देवान् भवत्स्वावाहयिष्ये इत्युक्त्वा आवाहयेति प्रत्युक्तो, यवहस्तो निरंगुष्ठहस्तं गृहीत्वा, विश्वे- देवास आगतेति पादादिमूर्धान्तं सव्यसंस्थं उभयोर्मन्त्रावृत्या यवान्विकीर्य, विश्वेदेवाश्शृणुतेत्या-

गच्छन्तु महाभागाः ... सावधाना भवन्तु त इति द्वाभ्यामुपस्थाय, स्वाहार्घ्याविति सक्नन्निवेद्य, हस्तयोरन्या अपो दत्वान्तर्हितदर्भान् हस्ते निधाय, पात्रासादनदर्भैस्सह अर्घ्यपात्रमादाय, या दिव्या आपः पयसा ... भवन्त्विति यथोक्तविश्वेदेवा इदं वोऽर्घ्यमिति देवतीर्थेन प्रथमं प्रथमस्य दत्वा, एवं द्वितीयं द्वितीयस्य, एकं चेदुभयोर्विभज्य दद्यात् । (पात्रार्चनमेकत्रैव) एको ब्राह्मणश्चेत्पात्रद्वयार्घ्यमपि तस्मा एव दद्यात् । अर्चत प्रार्चतेति पूर्ववद्यवैरभ्यर्च्य, गन्धद्वारामिति यथोक्तविश्वेदेवा अमी वो गन्धा इति गन्धं दद्यात् । सपवित्रो न स्वयमनुलिंपेत् । आयने ते परायण इत्यलंकारं पुष्पाणि च । मल्लिकाश्वेतयूथिकाशतपत्रपद्मोत्पलचम्पकजलोद्भवपुष्पाणि तुलसीभृङ्गराजपत्राणि च ग्राह्याणि ॥

धूरसीत्यगर्वादि धूपं, तदभावे उदकेनैव साङ्कल्पिको वो धूप इति । उद्दीप्यस्वेत्ययं वो दीप इति दीपं वो ज्योतिरिति वा, युवा सुवासा इति वासांसि वाससी वासो वा, तदभावे उपवीतयुगळं, तदभावे कुशौ वा । पवित्रार्थमिमे कुशा इति कुशाः । अर्चनं संपूर्णमित्युक्ते अस्त्विति प्रतिवचनम् । सङ्कल्पसिद्धिरस्त्विति भवन्तो ब्रुवन्त्विति ब्रूयात् । अस्तु संकल्पसिद्धिरिति प्रतिवचनम् । यथाविध्यर्चितमिति ब्रूयात्, स्वर्चितमिति प्रत्युक्तो, युष्मदनुज्ञया पित्राद्यर्चनं करिष्य इति संकल्प्य कुरुष्वेति तैरुक्तः, अथ पित्रभिमुखी दर्भान् द्विगुणभुग्नान् त्र्यवरानयुग्मान् आदाय पितुर्गोत्रस्य शर्मण इत्यासनार्थं वामभागे दद्यात्, न पाणौ । ब्राह्मणत्रयं चेत्पितुरेव स्थाने अर्घ्यपात्रत्रयं, नोभयोरपि स्थाने, विभज्यैवार्घ्याणि दद्यात् । प्रकृतश्राद्धे क्षणः क्रियतामित्यादि सर्वं पूर्ववत् कुर्यात् ॥ ३९ ॥

इति एकोनचत्वारिंशः खण्डः ॥

## चत्वारिंशः खण्डः

अथ प्राग्दक्षिणाग्रेषु दर्भेषु तैजसान्यश्ममयानि मृण्मयानि पर्णमयानि वा त्रीण्यर्घ्यपात्राणि आग्नेयापवर्गाणि स्युः । अयुग्मा दर्भाः । तिलोसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्त स्वध एहि; पितरं गोत्रं शर्माणं वसुरूपमित्याद्यूहेन इमान् लोकान् प्रीणयाहि नस्स्वधा नम इति प्रतिपात्रं मन्त्रावृत्त्या तिलानावपति । पित्रे ते जुष्टं गृह्णामीत्यर्घ्यग्रहणम् । भृङ्गराजादीनि निक्षिप्य, पितृपात्राणि संपन्नानीत्यभिमृश्य, पितरं गोत्रं शर्माणं वसुरूपमित्यादि भवन्तमावाहयिष्य इत्युक्त्वा उशंतस्त्वा हवामह इति मूर्धादिपादान्तं दक्षिणाङ्गसंस्थं प्रतिब्राह्मणं मन्त्रावृत्त्या तिलान्विकिरेत् । आयन्तु नः पितरस्सोम्यास इत्युपस्थाय, सकृत्स्वधार्घ्या इति सकलं निवेद्य, या

दिव्या इति पितः गोत्र शर्मन् (वसुरूप) सपत्नीक इदं ते अर्घ्यमिति सव्योपगृहीतेन दक्षिणेन पाणिना पितृतीर्थेन (प्रथमस्य) प्रथमं दद्यात्। एवमितरयोः। एकश्चेत्सर्वाणि तस्मा एव निवेद्य तद्धस्त एव पुनः अपो दद्यात्। यदि बहवः पित्रर्थब्राह्मणेभ्यः प्रथमपात्रं सकृन्निवेदयेत्। एवमन्येभ्यः अर्घ्यं विगृह्य प्रतिब्राह्मणं मन्त्रावृत्त्या दद्यात्। हस्तसंस्रावोदकं पितृपात्रे निनीय, पितामहप्रपितामहपात्राभ्यां पिधाय, पितृभ्यस्स्थानमसीति वामपार्श्वे पुरतो निधाय, तिलादिभिरभ्यर्च्य तत्पात्रं नोद्धरेदापितृकोपस्थानात्। एवं मातामहवर्गे न्युब्जं वा कृत्वा स्वधावाचनान्तमुद्धार्थ उत्तानं कुर्यात्। अर्चत प्रार्चतेत्यादि यथाविध्यर्चितमस्त्वित्यन्तं पूर्ववद्यवस्थाने तिलास्थिस्थाने गन्धदानम्॥

स्वधार्घ्ये स्वस्तिसंपन्ने गन्धपुष्पतिलेषु च।
धूपदीपादिदानेषु नामधेयादि नेष्यते॥

(वासांसि वाससी वासो यो न दद्यान्मृतेऽहनि।
पितरस्तस्य तद्वर्षं नग्ना एव न संशयः॥ वस्त्राभाव उपवीतं दद्यात्)

विष्णोर्विश्वेदेववदभ्यर्चनं, एकमर्घ्यपात्रं, तद्विष्णोरित्यावाहनं, तद्विप्रास इत्युपस्थानं, शेषं समानम्॥

भोजनपात्रस्थानेषु वारिणा चतुरश्रमंडलानि कुर्यात्। पात्राणि हेमरौप्याणि दैवे पित्र्ये यथाक्रमम्। तदलाभे, पलाशमधूकोदुंबरद्वयप्लक्षचूतपनसपुन्नागचम्पककुटजककचाद्यनिषिद्धपात्राणि ग्राह्याणि; अभावे साग्रसदण्डकदलीपर्णानि वा भोजनार्थं पुरतस्संस्थाप्य, आज्यादिधारणार्थं क्षुद्रपात्राणि पात्रान्तरे भूमौ (वा); न दारुपात्रे। दर्भैस्तिलैर्भस्मना चादावन्ते मध्येंभसा च मर्यादां कुर्यात्। घृताक्तमन्नं घृतं चादाय प्रकृतश्राद्धे भवदनुज्ञया अग्नौकरणं करिष्य इति संकल्प्य; कुरुष्वेत्यनुज्ञातः पैतृवत्परिस्तीर्य परिषिच्योपवीती दक्षिणं जान्वाच्य, अभिघार्य मेक्षणं धृत्वा स्रुवेणोपस्तीर्य अन्नं स्रुवेणावदाय, पुनस्स्रुवेणाभिघार्य सोमाय पितृमते स्वधा नम इति हुत्वा, मेक्षणशिष्टमोदनमन्यस्मिन्पात्रे निधाय, पूर्ववदुपस्तीर्य अवदाय अभिघार्य यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयां हुत्वा, पूर्ववद्धुतशिष्टं निधाय, ततः पूर्ववदुपस्तीर्य शिष्टद्वयं अवदाय अग्नये कव्यवाहनाय स्वधा नम इति सर्वं जुहोति॥

ततस्तूष्णीं मेक्षणमग्नौ प्रहृत्य पूर्ववत्परिषिच्य, प्रक्षालितेषु भोजनपात्रेषु उपस्तीर्य हुतशेषं पितृपात्रेषु स्वधेयमिति त्रिः किंचित् किंचिन्न्यस्य; न दैवपात्रे। आहिताग्नेर्नाग्नौ ...

करणहोमत्रयं कुर्यात्; असमाहिताग्नीनां आहुतिद्वयमेवेत्याहुः यमा इति वर्ज्यम्। हुतशिष्टं प्रज्ञात-स्थले निधाय अन्नादिकमुपवीती दद्यात् ॥

अन्नं च पायसं भक्ष्यं[1] व्यञ्जनादि घृतं तथा।
सूपमन्ते प्रदातव्यं[2] विपरीते तु निष्फलम् ॥

भक्ष्योदकफलव्यतिरिक्तानि दर्व्या देयानि तृणपर्णाद्यन्तर्हितहस्तेन वा। दर्व्याज्यं सकृदेव बहु दद्यात्। परिवेष्यमाणे सह वै देवानामित्यन्नसूक्तानि जपेत् ॥

[3] निमन्त्रणे जपेद्दोग्ध्रीं नियुक्तस्तु निषङ्गिणः।
भुक्त्वा तु वामदेव्यं च श्राद्धभोजी न लिप्यते ॥

गायत्र्या अन्नादीनि प्रोक्ष्य, देवपात्रे तूष्णीं परिषिच्य, दक्षिणोत्तराभ्यां पाणिभ्यां पृथिवी ते पात्रमित्यादि अमुष्मिंल्लोके इत्यन्तमुक्त्वा, इदं विष्णुरिति जपित्वा, स्वाहा विष्णो हव्यं रक्षस्वेति [4] द्विजाङ्गुष्ठमन्ने निवेश्य, उक्ता विश्वेदेवा एतद्वो हव्यं सपरिकरं उक्ता विश्वेदेवा देवता इदमन्नं हव्यं सपरिकरं ब्राह्मणस्त्वाहवनीयार्थे दत्तं दास्यमानं च आतुष्टेस्तत्सर्वं गयेयं भूर्गदाधरो भोक्ता अन्नं ब्रह्म अहं च ब्रह्म भोक्ता च ब्रह्म (कल्पितं) स्वर्णमयं पात्रं अक्षयवटच्छायेयं उक्तेभ्यो विश्वेभ्यो देवेभ्य इदमिदमन्नं अमृतस्वरूपमातुष्टेर्दास्यमानमक्षय्यतुष्ट्यर्थं यथाभागं हव्यं ओं तत्सत् स्वाहा हव्यं न मम न ममेति सव्येन पात्रं स्पृष्ट्वा दक्षिणेन यवदर्भोदकं (पात्राग्रे) विसृज्य, गयायां श्रीरुद्रपादादि समस्तपादेषु (समस्ततीर्थेषु) दत्तमस्त्विति भवन्तो ब्रुवन्त्विति ब्रूयात्, तथेति प्रतिवचनम्। एवं द्वितीयस्यापि दत्वा ये देवा दिव्येकादशस्थ इत्यादि जुषध्व-मित्यन्तमागच्छन्त्विति चोपस्थाय, (आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते, सावधानोस्मीति प्रतिवचनम् ॥) पितृसन्निधावपसव्यं जान्वाच्य, परिषेचनादि पूर्ववद्दद्यात्। सव्योत्तराभ्यां पाणिभ्यां पात्रस्पर्शो हव्यस्थाने कव्यं पदं, तुष्टेः स्थाने तृप्तेः, सौवर्णस्थाने रजतपदं स्वाहास्थाने स्वधाशब्दः। ततः पितः गोत्र इत्याद्येतत्ते कव्यं सपरिकरं पिता गोत्रः शर्मा वसुरूपस्सपत्नीको देवतेत्यादि तिलोदकं (पात्रमूले) विसृजेदेवं पितामहादीनाम् ॥

---

1. घृतं च व्यञ्जनादिकम् इति पाठान्तरम्। 2. सर्वं स्याद्देवपूर्वकम् इति पाठान्तरम्।
3. निमन्त्रिते इति पाठान्तरम्। 4. द्विजाङ्गुष्ठेन अन्नादीनि स्पर्शयित्वा इति पाठान्तरम्।

"ये चेह पितरो ये च नेह याꣳश्च विद्म याꣳउ च न प्रविद्म ।
त्वं वेत्थ यदि ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व"

इति पितॄनुपस्थाय, देववद्विष्णोर्दद्यात् । तद्विष्णोरित्युपस्थानं कुर्यात् ॥ ४० ॥

इति चत्वारिंशः खण्डः ॥

## अथ एकचत्वारिंशः खण्डः

अथ, देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः ॥

ईशानः पितृरूपेण महादेवो महेश्वरः ।
प्रीयतां भगवानीशः परमात्मा सदाशिवः ॥

मन्त्रमध्ये क्रियामध्ये विष्णुस्मरणपूर्वकम् ।
यत्किंचित्क्रियते कर्म तत्कर्म सफलं भवेत् ॥

यज्ञेशाच्युत गोविन्द माधवानन्त केशव ।
कृष्ण विष्णो हृषीकेश वासुदेव नमोऽस्तु ते ॥

इति जपित्वा सप्त श्लोकान् पठेत् ।

सप्त व्याधा दशार्णेषु मृगाः काळांजने गिरौ ।
चक्रवाकाश्शरद्वीपे हंसास्सरसि मानसे ॥

ये स्म जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं तेभ्योवसीदथ ॥

अमूर्तानां च मूर्तानां पितॄणां दीप्ततेजसाम् ।
नमस्यामि सदा तेषां ध्यायिनां योगचक्षुषाम् ॥

चतुर्भ्यश्च चतुर्भ्यश्च द्वाभ्यां पञ्चभिरेव च ।

हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥

यज्ञेश्वरो हव्यसमस्तकव्यभोक्ताव्ययात्मा हरिरीश्वरोत्र ।
तत्सन्निधानादपयान्ति सद्यो रक्षांस्यशेषाण्यसुराश्च सर्वे ॥

त्वां योगिनश्चिंतयन्ति त्वां यजन्ति च यज्वनः ।
हव्यकव्यभुगेकस्त्वं पितृरूपस्वरूपधृक् ॥

कर्ता क्रियाणां स स इज्यते क्रतुस्स एव तत्कर्म फलं च तस्य ।
स्रुगादि यत्साधनमप्यशेषं हरेर्न किंचिद्व्यतिरिक्तमस्ति ॥

देशकालपात्रमन्त्रतन्त्रकर्तृभोक्तृहविर्नियमस्थलद्रव्यादिभ्यः सर्वं न्यूनातिरिक्ताभ्यामिदं कर्माच्छिद्रमस्त्विति भवन्तो ब्रुवंत्विति तिलाक्षतदर्भोदकमुत्सृजेत् । अच्छिद्रमस्त्विति (प्रति) ब्रूयुः । वर्तमानमुक्त्वा प्रकृतश्राद्धे पित्रादीन् गोत्रादिसहितान् (द्वितीयया)निर्दिश्य, विश्वान् देवांश्च विष्णुं चोद्दिश्य, मया क्रियमाणेन प्रकृतश्राद्धेन पितृपितामहप्रपितामहानां गोत्राणां शर्मणां वसुरुद्रादित्यरूपाणां, विश्वेषां देवानां, विष्णोश्चैतेषां सर्वं सुगुणीभूत्वा कोटिशः कृतेन गयान्नश्राद्धेनेव अक्षयतृप्तिद्वारा पुनरावृत्तिरहितशाश्वतब्रह्मलोके सुखनिवाससिद्धिरस्त्विति (भवन्तो ब्रुवन्त्विति) साक्षतदर्भतिलोदकं विसृज्य, नमो देवेभ्यः स्वधा पितृभ्यः, नमो विष्णवे इति दंडवत्प्रणमेत् । ते च पुनरावृत्तिरहितशाश्वतब्रह्मलोके सुखनिवाससिद्धिरस्त्विति प्रतिब्रूयुः ॥

ओं तद्ब्रह्मेत्यादि जपित्वा परिषेचनार्थमुदकं दद्यात्, मन्त्रं कर्ता वदेत् । न चित्रगुप्तबलिं दद्युः । अन्नेषु मध्वासिच्य, सावित्रीं मधुव्राता इति तृचं जपित्वा, मध्विति त्रिरुक्त्वा, आपोशनं प्रदाय, उपवीती उदङ्मुखास्तिष्ठन् पितॄन् गयां च ध्यात्वा —

ईशानविष्णुकमलासनकार्तिकेयवह्नित्रयार्करजनीशगणेश्वराणाम् ।
[1]क्रौञ्चामरेन्द्रकलशोद्भवकाश्यपानां पादान्नमामि सततं पितृमुक्तिहेतोः ॥

गयेति त्रिरुक्त्वा इयं भूमिर्गया एते ब्राह्मणा भोक्तारो गदाधराः ॥

---

1. "सभ्यावसथ्यदधिकण्वमतङ्गजानां" इति च पाठः ॥

गयायां धर्मपृष्ठेषु सदसि ब्रह्मणस्पतेः।
गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयम्॥

इति ध्यात्वा,

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः।
त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः॥

अस्मत्पितॄणां प्रकृतश्राद्धयज्ञेन सर्वात्मकः पितृरूपी भगवान् श्रीजनार्दनः प्रीयतां इति यवदर्भतिलोदकं विसृजेत्। ओं तत्सदित्युक्त्वाऽमृतोपस्तरणमसीत्यापोशनं संपाययित्वा, प्राणाहुतिकाले श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि, शिवो माविशाप्रदाहाय प्राणाय स्वाहेत्यादि प्राणाहुतिमंत्रान् जपित्वा ब्रह्मणि म आत्माऽमृतत्वायेति वदेत्। यथासुखं जुषध्वमिति भोजनाय अतिसृजेत्। मौनेन भुञ्जीरन्। यथाशक्ति राक्षोघ्नान्वैष्णवान्पैतृकान् पावमानांश्च श्रावयिष्य इत्युक्त्वा, श्रावयेत्यनुज्ञातः श्रावयेत्॥

अपेक्षितं याचितव्यं त्याज्यं चैवानपेक्षितम्।
उपविश्य सुखेनैव भोक्तव्यं * शुद्धमानसैः॥

हस्तसञ्ज्ञया याचितव्यं, तद्दातव्यं मौनेन, अन्यथा उभयोर्दोषः॥

हविर्गुणा न वक्तव्या यावत्पिंडान्न निर्वपेत्।
यावदुष्णं भवत्यन्नं यावद्भुञ्जन्ति वाग्यताः॥

पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः॥ इति॥

भुक्तवत्सु विप्रेषु तृप्तान् ज्ञात्वा, पात्रत्रयेणान्नमादाय सव्याहृतीं गायत्रीमुच्चार्य मधुमतीभिः श्रावयेत्। अक्षन्नमीमदन्तेति च श्राद्धं संपन्नमिति पृष्ट्वा, सुसंपन्नमिति प्रत्युक्ते श्राद्धार्थेषु संपादितेषु पदार्थेषु यदिष्टं तत्प्रष्टव्यमिति पृच्छेत्। सर्वं संपूर्णमिति प्रत्युक्ते, विश्वेदेवास्तृप्ताः स्थ इत्यन्नहस्तः पृच्छेत्। तृप्ताः स्म इति प्रत्युक्ते, भूमौ पात्रद्वयं निधाय—

असोमपाश्च ये देवा यज्ञभागविवर्जिताः।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदैविकम्॥

इति सजलान्नं प्राग्दक्षिणेनोच्छिष्टपात्रद्वयसमीपे विकीर्य शेषं विष्णवर्थं निधाय अन्यपात्रमादाय, पित्रादीन् तृप्ताः स्थेति पृष्ट्वा तृप्ताः स्मेति प्रत्युक्ते—

---

* स्वस्थमानसैरिति पाठान्तरम्।

असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः ।
दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम् ॥

इत्यप्रदक्षिणं विकिरेत् । पूर्वशेषमादाय विष्णो तृप्तोसीति पृच्छेत्तृप्तोस्मीति प्रत्युक्ते —

असंशयो भवेद्विष्णुर्मोक्षसाधनमव्ययम् ।
पितॄणां च वरं श्रेष्ठं विकिरान्नं च वैष्णवम् ॥

इति पूर्ववद्विकिरेत् । पितॄणां पुरतो दक्षिणाग्रान्दर्भान् संस्तीर्य तिलोदकं निनीयाऽन्यपात्रान्नमादाय,

येऽग्निदग्धाऽनग्निदग्धा ये वा जाताः कुले मम ।
भूमौ दत्तेन पिंडेन तृप्ता यांतु परां गतिम् ॥

इति अग्निदग्धेभ्योऽनग्निदग्धेभ्योऽस्मत्कुलप्रसूतमृतेभ्योऽयं पिंडः स्वधा नम इति अन्नं प्रकीर्य, अग्निदग्धा अनग्निदग्धाश्च मार्जयंतां एतद्वस्तिलोदकमिति तिलोदकं दत्वाऽऽचामेत् ।

श्राद्धेषु विकिरं दत्वा नाऽऽचमेन्मतिविभ्रमात् ।
पितरस्तस्य तन्मासे भवंत्युच्छिष्ट[1] भाजिनः ॥ इति

अथ कर्ता उच्छिष्टभाग्भ्योन्नं दीयतामिति प्रार्थयेत् । भोक्तारस्तु —

यजमानकुले जाता दासा दास्योन्नकांक्षिणः ।
ते सर्वे तृप्तिमायांतु मया दत्तेन भूतले ॥

इत्युच्छिष्टं पात्रेभ्यः स्वस्वदक्षिणतः बहिष्कुर्युः । अमृतापिधानमसीति पितृपूर्वकमुत्तरापोशनानि दत्वा, 'श्रद्धायां प्राणे निविश्यामृतꣳहुतं' इत्यनुवाकद्वयं जपेत् । ततः,

रौरवेऽपुण्यनिलये पद्मार्बुदनिवासिनाम् ।
अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु ॥ इति वदेत् ॥ ४१ ॥

इत्येकचत्वारिंशः खण्डः ॥

## अथ द्विचत्वारिंशः खण्डः

## अथ पिण्डदानम्

भुक्तवत्स्वाचान्तेषु पिण्डान्निदध्यात् । अत्राचमनमुत्तरापोशनम् । पितुरमावास्यान्नश्राद्धे तिलोदकपिण्डप्रदानानि करिष्य इति (संकल्प्य) कुरुष्वेत्यनुज्ञातो, भुक्तशेषान्नमुद्धृत्य हुतशेषेण संमिश्रय —

---

1. भोजना इति पाठान्तरम् ।

हुतशेषतिलाम्बूनि पयो दधि गुडं तथा ।
मधुसर्पिस्समायुक्तमष्टाङ्गं पिण्डलक्षणम् ॥

इति एवं षट्पिण्डान् कृत्वा पितॄणां पुरतो भोजनपात्राद्बाहुमात्रं त्यक्त्वा आग्नेयापवर्गं गोमयेनाम्भसाऽनुलिप्य 'अपां मेध्यं यज्ञियमिति' सकृदाच्छिन्नदर्भानाहृत्य 'अपहता असुरा रक्षांसि पिशाचा वेदिषदः' इति दक्षिणाप्राचीं मेक्षणेनोल्लिख्य 'शुन्धन्तां पितर' इति तामद्भिरवोक्ष्य 'आयन्तु नः पितरो मनोजवस' इति सकृदाच्छिन्नमभिमंत्र्य, सकृदाच्छिन्नमिति मन्त्रेण द्वेधान् दर्भानास्तीर्य, सव्यं जान्वाच्य, मार्जयन्तां मम पितर' इत्यादि पश्चिमदर्भेषु, एवं मातामहानां पूर्ववद्दर्भेषु एतत्ते पितः गोत्र शर्मन् वसुरूप सपत्नीक ये च त्वामनु एतत्ते पित्रे गोत्राय शर्मणे वसुरूपाय सपत्नीकाय ये च तमनुगच्छन्ति तेभ्यश्चायं पिण्डः, तस्मै ते स्वधा नमः गयायां दत्तं इत्यादि दक्षिणापवर्गान्पिण्डान्दत्वा तं हस्तं तेषु दर्भेषु निमृजेत् ।

न्युप्य पिण्डान् पितृभ्यस्तु प्रयतो विधिपूर्वकम् ।
तेषु दर्भेषु तं हस्तं निमृजेल्लेपभागिनाम् ॥

एवमितरेषाम् । यन्मे माता प्रममादेत्यादि पिण्डानुपस्थाय, अत्र पितरो यथाभागं मन्दध्वमित्युक्त्वा पराङावर्तते ओष्मणो व्यावृत उपास्ते अमीमदन्त पितरस्सोम्या इत्यभिपर्यावृत्य, ये समाना इति (उपस्थाय) अन्ते वीरं धत्त पितर इति पिण्डशेषान्नं प्राश्नीयात् । आघ्राय वा, आचम्य पूर्ववत् तिलोदकं निनीय, पितः गोत्र इत्यादि आंक्ष्वेत्यञ्जनं, अभ्यंक्ष्वेत्यभ्यञ्जनं, एतानि वः पितर इत्यादि-(स्व)वाससो दशांच्छित्वा निदधाति । एवं मातामहादीनामूहेन । नमो वः पितर इत्यादि भूयासमित्यन्तेन नमस्कारान् कुर्यात् । गृहान्नः पितरो दत्त सदो वः पितरो गेष्मेति पितॄनुपतिष्ठते । अर्घ्यसंस्रावोदकमादाय ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन् तृप्यत तृप्यत तृप्यत इति पिण्डानामप्रदक्षिणं निनीय, पात्राण्युब्जं कृत्वा तृप्यतेति यजुस्त्रिरुक्त्वा, मनोन्वाहुवामहेति तिसृभिः पितॄनुपस्थाय उत्तिष्ठत पितर इति पितॄनुत्थापयति । परेत पितर इति प्रवाहिण्या पितॄन्प्रवाहयति । प्रजापते न त्वदिति यज्ञोपवीती औपासनदेशं गच्छति । यदन्तारिक्षमिति गार्हपत्यवर्जमौपासनमुपस्थाय, पिण्डान् संपूज्य, वटकवर्जं नैवेद्यं तांबूलं निवेद्य,

शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे ।
उद्धरेत्सप्तगोत्राणि कुलमेकोत्तरं शतम् ॥

इति वदेत् ।

(पुनस्संकल्प्य) प्रकृतश्राद्धे पित्रादीनुद्दिश्य मया कृतप्रकृतश्राद्धीयतिलोदकपिण्ड-

## अथ पिण्डोद्वासनम्

अयोध्या मथुरा माया काशी कांची अवंतिका।
पुरी द्वारवती चैव सप्तैते मोक्षदायकाः ॥

इति स्मृत्वा, पिंडानुद्वास्य, पात्राणि प्रक्षाळ्य, द्वन्द्वश उत्सृज्य पुत्रकामश्चेदपसव्येन पितामह-पिंडमादाय अपां त्वौषधीनामिति पत्न्यै प्रयच्छति। 'आधत्त पितरो गर्भं कुमारं पुष्करस्रजं यथेह पुरुषोसत्' इति (पत्नीं) वाचयेत्। तं पत्नी प्राश्नाति। बह्वृचश्चेद्विभज्य मन्त्रावृत्या दद्यात्।

दर्शश्राद्धेषु सर्वेषु न भुंजीतानुमासिके।
सपिण्डीकरणे चैवं अमायां च मृतेऽहनि ॥

एतत् दर्शश्राद्धेषु न कुर्यात्।

मासिकेषु च सापिंड्ये अमायां च मृतेहनि।
न दद्यान्मध्यमं पिंडं प्रदद्यादितरत्र तु ॥

पुत्रे जाते तु षाण्मासान्नारीजातौ ऋतुद्वयात्।
न देयं रजसः पूर्वं न देयं रजसः परम् ॥

गर्भिणी यदि वा वंध्या विदेशस्था रजस्वला।
नाश्नीयान्मध्यमं पिंडं रोगिणी जारिणी सदा ॥

ये समाना इति सकृदाच्छिन्नमग्नौ प्रहरति। [1]अपः पिंडानभ्यवहरेत्। छागं गां ब्राह्मणं वा प्राशयेत्। ततः स्वस्तीति ब्रूयाच्छोभनं हविरिति ब्रूयुः ॥ ४२ ॥

इति द्विचत्वारिंशः खण्डः ॥

## अथ त्रिचत्वारिंशः खण्डः

अथ पाणिमुखपादप्रक्षाळनार्थं ब्राह्मणेभ्यः पितृपूर्वकं जलं दत्वा, आचांतान् ब्राह्मणान् उपवेश्य पितृपूर्वकं हस्तेष्वपो दत्वा, यथार्हं तिलयवदर्भान्प्रदाय, पुनरपो दद्यात्। एषा हस्तशुद्धिः। अमुकगोत्रोहमभिवादये इति अभिवाद्य, देवतापितृप्रसादेन अस्मद्गोत्रमभिवर्धतां इति गोत्रवृद्धिं

---

1. पाठांतरं — गंगांभसि विसृजेद्ब्राह्मणीं वा प्राशयेत्। पिंडस्थाने स्वस्ति शोभनं हविः शान्तिरस्तु पुष्टिरस्त्वित्यादि ब्रूयात्।

वाचयेत् । स्वस्ति वर्धतां गोत्रम्, उक्तविश्वेदेवप्रसादोस्तु, पितृप्रसादोस्तु, (विष्णुप्रसादोस्तु) इति प्रतिब्रूयुः । पात्राणि चालयित्वा उद्वास्य, स्वस्तिवाचनं कुर्यात् ॥

अचालयित्वा यत्पात्रं स्वस्ति कुर्वंति ये द्विजाः ।
निराशाः पितरस्तेषां शप्त्वा यान्ति यथागतम् ॥

भोजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः ।
तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः ॥

पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योथवा सुतः ।
न स्त्रीभिर्न च बालाभिर्नासजात्या कथंचन ॥

श्राद्धे तूच्छिष्टपात्राणि खनित्वैव हि निक्षिपेत् ।
पुनरास्वादयेच्छ्वानैर्यथा न स्पृशते तथा ॥

विश्वेदेवाः स्वस्तीति ब्रूत इत्युक्त्वा स्वस्तीति प्रत्युक्ते विश्वेषां देवानां स्वेन दत्तं श्राद्धमक्षय्यमस्त्विति ब्रूतेति प्रत्येकं यवोदकं दद्यात् । पितृपितामहप्रपितामहास्सपत्नीकाः स्वस्तीति ब्रूतेत्युक्त्वा पूर्ववत् प्रत्युक्ते पितुः गोत्रस्येत्यादि पूर्ववत् तिलोदकं दद्यात् । एवं मातामहानां विष्णोश्च यवोदकं उपवीती पूर्ववद्दद्यात् ॥

पितॄणां वल्लभं यस्माद्धरीन्द्वोश्च शिवस्य च ।
रजतं पाहि नस्तस्माद्दुःखसंसारसागरात् ॥

उपविष्टेभ्यो ब्राह्मणेभ्यः श्राद्धसाद्गुण्यार्थं दक्षिणाः पांत्विति हिरण्यं धनं वस्त्रादिकं पितृपूर्वकं दद्यात् । पांतु दक्षिणा इति प्रतिब्रूयुः । पितृभ्योऽधिकदक्षिणां दद्यात् "दद्यात्तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत्" । तान् प्रियोक्त्यादिभिः परितोष्य स्वाहां वाचयिष्ये स्वधां वाचयिष्ये इत्युक्त्वा वाच्यतामित्यनुज्ञातो ऊर्जं वहंतीरित्यनुवाकशेषेण पित्रादिभ्यः स्वधोच्यतामिति भवंतो ब्रुवंत्विति पादप्रक्षालनदेशे दक्षिणामुखस्सन् अर्वागग्रकूर्चदर्भैः सह भूमौ जलं सिंचेत् । स्वधोच्यतामिति प्रतिब्रूयुः । ओं स्वधेति वदेत्, अस्तु स्वधेति प्रत्युक्ते, स्वधास्संपद्यंतां, संपद्यंतां स्वधा इति प्रत्युक्ते, विश्वेदेवाः प्रीयंतां इति हस्तयोर्यवोदकं दद्यात्, प्रीयंतां विश्वेदेवा इति प्रतिवचनम् । पितृपितामहप्रपितामहा इत्यादिष्वंतं प्रतिवचनमेव । वाजे वाज इति दर्भस्पर्शेन उत्तिष्ठत पितरः अनुगच्छंतु विश्वेदेवाः विष्णुना सह इत्युत्थाप्य आमावाजस्येति ब्राह्मणान् त्रिः प्रदक्षिणीकृत्य दक्षिणामुखः प्राञ्जलिस्तिष्ठन् —

दातारो नोऽभिवर्धतां वेदास्संततिरेव नः ।
श्रद्धा च नो माव्यपगाद्बहु देयं च नोऽस्तु ॥

अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नस्संतु मा च याचिष्म कंचन ॥

इति याचयति । भोक्तारः प्रतिवचनं तथास्त्विति ब्रूयुः । अन्नशेषैः किं क्रियतामिति शेषं निवेदयेत् । इष्टैस्सहोपभुज्यतामिति प्रत्युक्तः स्वादुषंस्सदः इति तृचं जपेदिहैवस्तमिति संप्रार्थयेत् । ब्राह्मणाः सर्वस्याप्त्या इत्याशिषो ब्रूयुः ॥ कर्ता

आयुः प्रज्ञां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छंति तथा राज्यं प्रीता नृणां पितामहाः ॥

सत्या एता आशिषस्संत्विति ब्रूयुः ॥

अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात् ।
अद्य मे वंशजास्सर्वे याता वोनुग्रहाद्दिवम् ॥

पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः ।
तत्क्लेशजातं चित्ते तु विस्मृत्य क्षंतुमर्हथ ॥

वसिष्ठवामदेवादिमुनिभिस्तुल्यतां गताः ।
पितॄणामनुगृह्णंतु ब्रह्मणः शाश्वतं पदम् ॥

इति संप्रार्थ्य, [1]अस्यां तिथ्यामेतस्मिन् श्राद्धे पित्रादीनुद्दिश्य मया कृतैरग्नौकरणब्राह्मणभोजनपिण्डप्रदानैः स्वेन कृतमेतच्छ्राद्धं गयाश्राद्धफलदमस्त्विति भवन्तो ब्रुवंत्विति प्रार्थयेत् । तथैवेति ब्रूयुः । देवताभ्य इति जपित्वा, यस्य स्मृत्येति जनार्दनाय समर्प्य, गंधाक्षततांबूलादीनि दत्वा, पितृपूर्वकमासीमान्तं अनुव्रज्य, अष्टावष्टाविति ब्राह्मणान् त्रिः प्रदक्षिणीकृत्य, प्रणम्य तान्विसृज्य गृहं प्रविश्याचम्य ब्रह्मयज्ञं नित्यतर्पणं च क्रमेण कृत्वा बन्धुभिस्सह भुंज्यात् ॥ ४३ ॥

इति त्रिचत्वारिंशः खण्डः ॥

---

पाठान्तरं — सूर्योपरागसदृशि अस्यां तिथ्यां अशनभाजनशाकपाकमन्त्रतन्त्रद्रव्यदक्षिणादिभिः किमपि न सत्कृतं मया कृताग्नौकरणब्राह्मणभोजनपिंडप्रदानाख्यकर्मत्रयं यथोक्तं यथाशास्त्रं गयाश्राद्धफलदमस्त्विति भवन्तो ब्रुवंत्विति प्रार्थयेत् ॥

## अथ चतुश्चत्वारिंशः खण्डः

## अथ नित्यादयः

अथ नित्यश्राद्धनैमित्तिकमन्वादियुगादिसंक्रांत्यष्टकान्वष्टकार्धोदयमहोदयालभ्ययोगकल्पादि [1]सोपपदपद्मकयोगतिथ्यादि पंचकश्राद्धानि एवमेव षट्पुरुषोद्देशेन कुर्यात्। महालयाष्टकोपराग-वृद्धिव्यतीपातवैधृतिगयातीर्थश्राद्धेषु मातुः श्राद्धं पृथक्कुर्यात् । नित्यश्राद्धमन्वादियुगादि-संक्रान्तिवारश्राद्धोदकुंभेषु पिंडदानं न कुर्यात्। संकल्पविधानमेव कुर्यात्। ग्रहणे तु हिरण्यश्राद्धमेव । तीर्थश्राद्धे अर्घ्यावाहनद्विजाङ्गुष्ठनिवेदनतृप्तिप्रश्नविकिराणि वर्जयेत् ।

तथा च श्लोकाः —

अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेदनम् ।
तृप्तिप्रश्नं च विकिरं तीर्थे पंच विसर्जयेत् ॥

आवाहनार्घ्ये पाद्यं च विकिरोच्छिष्टपिंडकाः ।
अग्नौकृतिः पिण्डदानं संकल्पे सप्त वर्जयेत् ॥
उदुकुम्भे हीनपिण्डं तृप्तिसंकल्पवत्तथा ॥

पितृमातृसापत्नीमातृभार्यामातामहज्येष्ठभ्रातृपितृव्याणां तत्पत्नीनामेतेषां अपुत्राणां भर्तुश्च मृताहे त्रिपुरुषोद्देशेनाग्नौकरणं त्वौपासने कुर्यात् । गुर्वाचार्यानुजसुतभगिनीदुहितृमातृष्वसृपितृष्वसृ-तत्पुत्राणां पितृमातृबंधुस्वामिसखिज्ञातीनां मृताहे एकोद्दिष्टं सदैविकमर्घ्यपात्रं, सर्वत्रैकवचनम् । अग्नौ-करणहोमं तु लौकिकाग्नावेव, (कुर्यात्।) पिण्डमेकं शेषं समानम्। उदुकुम्भश्राद्धे सपिण्डीकरणादूर्ध्वं पित्रादीनां त्रिपुरुषोद्देशेन गुर्वादीनामेकोद्दिष्टविधानेन । पित्रादीनामपि सपिण्डीकरणात्पूर्वमेकोद्दिष्ट-विधानमेव कर्तृभोक्तृनियमरहितं दैववर्जम्। अन्वहं वत्सरान्तं संकल्पविधानेनान्नमुदकुम्भं च दद्यात्, एतन्मासिकदिने कुर्यात्। अपि वा प्रतिमासं मृतेहनि मासिकमुदकुम्भं च पृथक्पाकेन दद्यात्। नित्यश्राद्धे दक्षिणादीनपि ॥

## अथ श्राद्धाङ्गतर्पणम्

दर्शसंक्रमणालभ्ययोगव्यतीपातवैधृतिमन्वादियुगादिमासिकश्राद्धेषु श्राद्धांगं तिलतर्पणं पूर्वं कृत्वा पश्चाच्छ्राद्धं कुर्यात्। पक्षमहालयहिरण्यश्राद्धवृद्ध्यष्टकान्वष्टककल्पादिसोपपदानुमासिकसपिंडी-करणसांवत्सरिकविमोकप्रथमाब्दिकेषु सापत्नीमातृज्येष्ठभ्रात्रादिकारुण्यप्रत्याब्दिकेषु श्राद्धाङ्गतिलतर्पणं श्राद्धानन्तरमेव कुर्यात्। कारुण्यश्राद्धेषु नित्यतर्पणं श्राद्धात्पूर्वमेव कुर्यात्। पितरि जीवति सति मातृश्राद्धकृत् (करणीय श्राद्धांगं) तर्पणं नास्ति । स्नात्वार्द्रवस्त्रेण श्राद्धावशिष्टतिलदर्भैः तर्पणं कुर्यात् ॥

---

1. "सोपपदार्धयोग" इति पाठान्तरम् ।

## संनिपातश्राद्धनिर्णयः

पित्रोर्मातामहस्य च प्रत्याब्दिकश्राद्धे दर्शादिसन्निपाते प्रत्याब्दिकं पूर्वं कृत्वा पश्चाद्दर्शादिकं कुर्यात्। कारुण्यप्रत्याब्दिके तु दर्शादिश्राद्धं पूर्वं कृत्वा ततः प्रत्याब्दिकं कुर्यात्॥

(दार्शिकं पूर्वतः कृत्वा पश्चात्कारुण्यमेव च।)

पित्रोस्संघातानुमरणे संबन्धव्यतिरिक्तश्राद्धद्वयसन्निपाते पृथक्पाकेन पितुः श्राद्धं पूर्वं कृत्वा ततो मातुः श्राद्धं कुर्यात्। तिथिद्वैविध्ये तथैव संघातानुमरणयोरेकपाकेन एकतन्त्रेण कुर्यात्। तिथिभेदे तु पृथक्पाकेन पृथक्तन्त्रेण कुर्यात्। इतरेषां सङ्घातानुमरणे ज्येष्ठक्रमेण मरणक्रमेण वा पृथक्पाकेन पृथक्तन्त्रेण कुर्यात्। पित्रोराब्दिकमासिकादिसन्निपाते मातुः पितुर्वा प्रत्याब्दिकं पूर्वं पश्चान्मासिकादि कुर्यात्। ततो दर्शश्राद्धं ततो नित्यमहालयं ततः पितृव्यादिप्रत्याब्दिकं सर्वं पृथक्पाकेन पृथक्तन्त्रेण कुर्यात्। कारुण्याद्याब्दिकसंपाते, पित्रोराब्दिकमासिकं वा पूर्वं कृत्वा पश्चात्कारुण्यश्राद्धं कुर्यात्। नित्यदार्शिकसंपाते दर्शश्राद्धं कुर्यान्न नित्यश्राद्धम्। कुम्भमासिकसंपाते मासिकमेव। दर्शेन युगादिमन्वाद्यलभ्ययोगसंपाते युगादिकमेव कुर्यात्। दर्शालभ्यसंपाते अलभ्यमेव कार्यम्। इदं कालैक्ये। कालभेदे तु पृथगेव भवति। तद्यथा सायंकाले सूर्योपरागश्चेन्नित्यदर्शश्राद्धे न कुर्यात्। उदकुम्भमासिकसंपाते नित्यदर्शयुगादिमन्वादिभिराब्दिकसंपाते आब्दिकेनार्धोदयमहोदयग्रहणसंक्रान्त्याद्यलभ्ययोगसंपाते उदकुंभश्राद्धादिकं पूर्वं कृत्वा पश्चान्नित्यश्राद्धादिकं पृथक्पाकेन श्राद्धद्वयं कुर्यात्। देवताभेदे सति श्राद्धद्वयं त्रयं वा पृथक्पाकेन पृथक्तन्त्रेण कुर्यात्। देवताभेदाभावे काम्यानुष्ठानान्नित्यं च सिध्यति॥

## अथाष्टकश्राद्धम्

अथाष्टकश्राद्धं—माघमासे अपरपक्षे अष्टम्यां अष्टकं मातृश्राद्धं पृथक्कुर्यात् दर्शवत्। ब्राह्मणनिमन्त्रणादि आच्छादनान्ते दध्यञ्जलिहोमं करिष्ये इति संकल्प्य पार्वणवदग्निमुखान्ते याञ्जनाः प्रतिनन्दन्ति इति दध्यञ्जलिना जुहोति। दधिशेषेण स्विष्टकृत् समित्सन्नहनं जयादयः सर्पबलिवदञ्जलिसंस्कारो बर्हिस्समञ्जनं परिधिप्रहरणादिब्रह्मविसर्जनान्ते दधि भोजनपात्रेषु निक्षिप्य शेषं पिण्डे नियोजयेत्। परिवेषणादि नवपिण्डानि दद्याच्छेषं समानम्। पूर्वाह्णे दधिहोमं कुर्यादित्येके। दर्शश्राद्धतर्पणादिरूपमपराह्णे कर्तव्यम्। श्वोभूते नवम्यां अन्वष्टकानामश्राद्धं दर्शवदविशेषेण कुर्यात्। यत्र पार्वणमुक्तं तत्राग्नौकरणमौपासने कुर्यात्। यत्रैकोद्दिष्टमुक्तं तत्र लौकिकाग्नावेव। विधुरश्चेत्सर्वत्र श्रोत्रियागारादग्निमाहृत्य व्याहृतिहोमं संस्कृताग्नौ कुर्यात्॥ ४४॥

इत्यष्टकाश्राद्धविधिः

इति चतुश्चत्वारिंशः खण्डः॥

## अथ पञ्चचत्वारिंशः खण्डः

## अथापरः खण्डः

शुभमस्तु अविघ्नमस्तु

## अथातः पैतृमेधिकं दहनम्

अथानाहिताग्नेः पैतृमेधिकप्रयोगो वक्ष्यते

अनाहिताग्नेर्मरणसंशये अद्भिस्स्नापयित्वा कुशास्तृतविलिप्तदेशे दक्षिणाग्रान्दर्भान् सःस्तीर्य तेषु दक्षिणाशिरसं कटे शाययित्वा, यथोक्तं सर्वप्रायश्चित्तं कृत्वा गोद्वयं तिलभूहिरण्यसालग्रामाणि च दापयित्वा दशदानानि कृत्वा (ब्रह्मविच्चेत्), ब्रह्मविदाप्नोति परं, भृगुर्वै वारुणिरित्येतावनुवाकौ ब्रह्मविदो दक्षिणकर्णे जपति। इतरस्यायुषः प्राणःसन्तन्वित्यनुवाकं विष्णुनाम च संकीर्त्य यदि म्रियेत पुत्रादयः केशान्प्रकीर्य पांसूनावपन्ते।

### कर्तृनिर्णयः

[1]पुत्रः पौत्रः प्रपौत्रश्च पुत्रिकापुत्र एव च।
पत्नी भ्राता च तत्पुत्रः पिता माता स्नुषा तथा॥

भगिनी भागिनेयश्च पिण्डदो धनहार्यपि।
पूर्वं पूर्वं परः कर्ता तदभावे परः परः॥

स्त्रीसंस्कारे कर्तारः गोपालभाष्ये—

औरसोथ सपत्नीजः पुत्रिकापुत्रकृत्रिमौ।
अपविद्धः पतिश्चैव दौहित्रो भ्रातृपुत्रिका॥

पिता माता स्नुषा [2]श्वश्रूः [3]स्वसा स्वस्रीय एव च।
भ्रातृपुत्रश्च जामाता सपिण्डास्सोदकाः क्रमात्।
पूर्वपूर्वविनाशे स्यादुत्तरोत्तरपिण्डदाः॥

औरसपुत्रः अनुपनीतोपि श्राद्धान्तं कुर्यात्, सपिण्डीकरणान्तमित्येके॥

---

१ पुत्रः पौत्रः प्रपौत्रश्च पुत्रिकापुत्रो दौहित्रः। पत्नी भ्राता च तत्पुत्रः पिता माता स्नुषा (भगिनी) भागिनेयः। सपिण्डो धनहारीति कर्तारः॥

२ स्वस्युः ३ स्वस्याः

## अथ स्त्रीसंस्कारे कर्तृनिर्णयः

पुत्रस्सपत्नीपुत्रः, पुत्रिकापतिर्दौहित्रो, पत्युर्भ्रातृपुत्रिका, श्वशुरः, श्वश्रूः, स्नुषा, पत्युः स्वस्रीयः मृतायाः स्वस्रीयः, भ्रातृपुत्रः, जामाता, सपिण्डास्सोदकाः क्रमात् ।

[1]विनाशे पूर्वपूर्वस्य प्रकुर्याद्युत्तरोत्तरम् ।
प्रथमेहनि यः कर्ता स दशाहं समापयेत् ॥

मध्ये मुख्यकर्तुरागमे तदानीमेवापकृष्य दशाहान्तं तिलोदकानि कृत्वा विसृजेत् । पुत्रश्चे-द्दशाहात्पूर्वं पुनस्तिलोदकादि दद्यात्तथा ।

## अथाग्निनिर्णयः

आत्मसमारूढे मृते प्रेतस्य सन्निधौ लौकिकाग्निं प्रतिष्ठाप्य, प्रेतस्य दक्षिणं पाणिमुपसंगृह्य उपावरोहेति लौकिकाग्नौ समिधं निक्षिपेत् । विच्छिन्नाग्निश्चेत् पूर्ववदग्निं प्रतिष्ठाप्य, चतुष्पात्रप्रयोगं कृत्वा परिषिच्य द्वादशगृहीतेनाज्येन स्रुचं पूरयित्वा प्रजापतिं मनसा स्मृत्वा तूष्णीं हुत्वा प्रेतौपासनं कुर्यात्, एतत्प्रेताधानम् ।

[2]पूर्वं पत्न्यां मृतायां विवाहशक्तश्चेत्सर्वौपासनेन दहनं कुर्यात् । अशक्तश्चेन्मथनाग्निना तां दहेत् । भार्याबहुत्वे तु अग्निसंसर्गे तासामेकस्यां मृतायां संसृष्टं औपासनं द्विधा विभज्य ज्येष्ठायै दक्षिणभागमितरासां उत्तरभागं तासामेकैकस्यां मृतायामेवं तमग्निं विभज्य तस्यै दद्यात् । असंसृष्टे तु तस्या अग्निना तां दहेत् ।

पूर्वौपासनाग्नौ द्वितीयविवाहहोमश्चेत्तस्यैकस्यां मृतायां सर्वमग्निं दत्वा स्थितया भार्यया सह विवाहप्रधानहोमपुरस्सरं लाजहोमं कुर्यात् । विधुराविधुरानुत्तपनाग्निना दहेत् । कपाल-तपनाज्जाताग्नौ दर्भमुष्टिं प्रज्वाल्य प्रज्वलिताग्निरुत्तपनोपिवा लौकिकाग्नौ दर्भमुष्टित्रयेण संपादये-देष वोत्तपनः । ब्रह्मचारिणं कपालतपनाज्जाताग्निना दहेत् । कन्याबालयोस्तप्ते कपाले तुषान्निक्षिप्य, तस्मिन् जातस्तुषाग्निः, तेनाग्निना दहेत् । सर्वान्व्याहृतिहोमसंस्कृतोत्तपनाग्निना वा दहेत् । ऊनद्वि-वार्षिकं प्रेतं निखनेत् । मृते श्मशानं नीत्वावटं खात्वा, तस्मिन्दर्भानास्तीर्य यमसूक्तं 'परेयुवां-समित्यादि' सप्तत्रिंशद्वाक्यानि यमगाथां 'योस्यकौष्ठ्यादि' वाक्यचतुष्टयं गायमानो दक्षिणा-शिरसं शाययित्वावटं मृद्भिः पूरयेत् । स्नात्वा गृहं व्रजेत् । ऊर्ध्वं चेत्कन्यानुपनीतौ पूर्वोक्ताग्निना 'अस्मात्त्वमधिजातोसीति' पुनर्दहनमन्त्रेणैव दहेत् । तूष्णीं तिलोदकं दद्यात् । पिण्डं तु भूमावेवा-

---

१ पूर्वपूर्वविनाशे उत्तरोत्तरे कुर्युः ।    २ पूर्वं पत्नीमृते विवाहशक्यः स्यात् ।

मन्त्रकं दशपिण्डान् दद्यात्, शेषं वर्जयेत्। आशौचे व्यतीते केशवादीनुद्दिश्य द्वादशब्राह्मणान् भोजयेत् एष नारायणबलिः।

अथ कर्ता सचेलं स्नात्वा एकपवित्रपाणिः सदर्भतिलहिरण्यहस्तः 'समस्तसंपदित्यादि' पूर्ववद्ब्राह्मणान् त्रिः प्रदक्षिणीकृत्य दक्षिणां निधाय नमस्कृत्य दक्षिणां दत्वा, प्राचीनावीती पितुर्गोत्रस्य शर्मणः प्रेतस्यौपासनाग्निना पैतृमेधिकविधिना संस्कर्तुं मम अधिकारसंपदस्त्विति भवन्तो ब्रुवन्तु इति प्रार्थयेत्; तथैव प्रत्युक्तः, ऊर्ध्वोच्छिष्टाधोच्छिष्टान्तरिक्षास्नानखट्वापर्युषित-मरणानि षण्णिमित्तानि। मरणकालसंभावितषण्णिमित्तदोषनिर्हरणार्थं प्रतिनिमित्तं प्रत्येकं प्रत्येकं कृच्छ्रत्रयं कुर्यात्। भद्रतिथौ मृते भूमिदानं, त्रिपदर्क्षे हिरण्यं, सौरादिवारदोषे वाराधिदैवत्यं वासस्सहिरण्येन, धनिष्ठापञ्चकर्क्षेषु कांस्यं दद्यात्। एवमन्येष्वपि दोषेषु हिरण्यं दद्यात्। मरणप्रभृति यामादूर्ध्वं पञ्चविंशद्घटिकाभ्यः पूर्वं दहेत्। रात्रौ चेन्नवनाडिकाभ्यः पूर्वं दहेत्। ऊर्ध्वं चेत् परेह्न्यस्तमनात्पूर्वं प्रयोगसंक्रमे तु रात्राविव समापयेत्। रात्रौ दाहे तु पिण्डान्तं कुर्याद्वपन-वर्जितमिति वपनवर्जनं मातृपितृविषयव्यतिरिक्त एव। नग्नश्राद्धमपि रात्रावेव कुर्यात्। नवश्राद्धं तूत्तरेण सहाचरेत्।

विधिवदग्निं संपाद्य प्राणानायम्य देशकालौ सङ्कीर्त्य संबन्धमुच्चार्यामुकगोत्रममुकशर्माणं प्रेतमौपासनाग्निना पैतृमेधिकविधिना संस्करिष्य इति सङ्कल्प्य, अपरेण प्रेतमौपासनं निधाय दक्षिणाग्रेषु दर्भेषु 'सर्वस्य प्रतिशीवरीति' दक्षिणाशिरसं संवेशयति। एवं सर्वेषु संवेशनेषु संस्कृते-नाज्येन पैतृमेधिकवत् परिस्तीर्य परिषेचितेग्नावन्वारब्धे प्रेते, 'परेयुवाꣳसमिति' स्रुवाहुतिं जुहोति। यमाय राज्ञ इति त्यागः। बह्वग्निकश्चेत्कनिष्ठभार्याद्यग्निषु तूष्णीं प्रत्येकं स्रुवाहुतिं हुत्वा स्रुवं प्रधानाग्नौ प्रहृत्य पूर्ववत्परिषिच्य तस्मिन्नग्नौ पथि पिण्डार्थं प्रसृतित्रयमात्रतण्डुलं जीवतण्डुलमिव चरुꣳश्रपयित्वाभिघार्य, अग्नेर्दक्षिणतः परिश्रित्य, प्रेतस्य केशश्मश्रुलोमनखानि वापयित्वा, स्त्रीणां वपनं नेच्छन्ति; स्नापयित्वा ग्राम्येणालङ्कारेण गोपीचन्दनादिभिः प्रेतमलङ्कृत्य हस्तयोः पादयोश्चाङ्गुष्ठे शुक्लसूत्राभ्यां बध्वा शिरसि नदलमालामाबध्य नळदेन शरीरमनुलिप्य, औदुम्बर्या-मासंद्यां कृष्णाजिनं दक्षिणाग्रीवं अधरलोमास्तीर्य तस्मिन् प्रेतमुत्तानं निपात्य 'इदं त्वा वस्त्रं प्रथमन्वागन्नि' त्यनेन प्रेतं पादतलमारभ्याखण्डितेन नूतनवस्त्रेण मुखं प्रच्छाद्य, 'अपैतदूहेति' प्रेतस्य पूर्वधृतवासःखण्डमादाय —

तं तु देवी नमस्तुभ्यमायसेन समन्वितम्।
आद्यादशाहपर्यन्तं सर्वारिष्टं निवारय॥

इति(सं)प्राध्र्य तूष्णीं धृत्वा सूतकनिर्गमपर्यन्तं वसीतौपासने पक्कं चरुवर्जं हिरण्यशकलान् राजगवीमग्निं दर्भान् आज्यस्थालीं प्रोक्षणपात्रमाज्यं दात्रं मेक्षणं स्रुक्स्रुवाबुदकुम्भतिलान् तंडुलान् तिस्रः पलाशशाखाः शमीशाखा वा समवदाय, प्रेतस्य पश्चान्नयन्ति, यदुपाकरोति तदपि नयेयुः । येन चान्येनार्थी भवति तदप्यादाय, न हीनमन्वाहरेयुः, प्रेताग्न्योर्मध्येन्तरा गमनं न कुर्यात् । अथ तमाददते शकटेन वहन्तीत्येके ॥ ४५ ॥

इति पञ्चचत्वारिंशः खण्डः ॥

## अथ षट्चत्वारिंशः खण्डः

इमौ युनज्मि ते वह्नीति वाहकान् युनक्ति । आसन्दीवहनपक्षे इमं मन्त्रं केचिन्नेच्छन्ति । तस्मिन्पक्षे वाहकान् (व)वाहनं क्रियतामिति (सं)प्राध्र्य तेषां वस्त्राणि यज्ञोपवीतानि वा दद्यात् । ततो वाहका निवीतिनो भूत्वा प्रेतमादाय ग्रामस्याभिमुखं पूर्वद्वारेणोत्तरद्वारेण वा नयेयुः । अथ कर्ता पूषा त्वेतश्च्यावयत्विति वाहकैर्नीयमानं प्रेतमनुमन्त्रयते । अध्वनश्चतुर्थांशं गत्वा प्रोक्ष्य निधाय तद्दक्षिणतो लोष्टानुद्धृत्य तेषु चरुं प्रतिष्ठाप्य एकवाससस्सर्वे ज्ञातयः दक्षिणान्केशपक्षानुद्ग्रथ्य सव्यान् विस्रस्य दक्षिणानूरूनाघ्नाना स्ववस्त्रैर्वीजयन्तः कनिष्ठपूर्वाः स्त्रीपुरस्सरा अपनश्शोशुचदघमिति प्रेतं चरुं अग्निं च त्रिरप्रदक्षिणं परियन्ति । ततस्सव्यानुद्ग्रथ्य दक्षिणान्विस्रस्य सव्यानूरूनाघ्नाना वस्त्रैर्वीजयन्तः त्रिः प्रदक्षिणं परीत्य प्रेतस्य दक्षिणं दात्रेणोल्लिख्य प्रोक्ष्य दर्भैरास्तीर्य तिलोदकं दत्वा मेक्षणेन लोष्टेषु चरोस्त्रिः प्रक्षिप्य पुनस्तिलोदकं दद्युः ॥

## अग्निपतनप्रायश्चित्तम्

ग्रामश्मशानयोर्मध्येग्निपतने तत्रैवाग्निं प्रतिष्ठाप्य "परेयुवांसमि"त्यादि पूर्ववत्कुर्यात् ॥

## शवपतनप्रायश्चित्तम्

शवपतनेग्निं प्रतिष्ठाप्य 'इमा रुद्राय' इति मन्त्रेण द्विसाहस्रमाज्येन जुहुयात्, त्रिंशतं वा कुर्यात् ॥

## आसन्दीभञ्जनप्रायश्चित्तम्

आसन्दीभञ्जने कृच्छ्रत्रयं कृत्वा सर्वप्रायश्चित्तम् । अन्तरागमने एवमेव ॥

'पूषा मे आशा' इत्यादीयमानमनुमन्त्रयते तृतीयमध्वनो गत्वा निधाय प्रोक्ष्य पूर्ववत्कृत्वा आदीयमानमनुमन्त्रयते । आयुर्विश्वायुरिति तुरीयमध्वनो गत्वा प्रोक्ष्य निधाय पूर्ववत् कृत्वा

चरुस्थालीं भिनत्ति यथा कपालेषूदकं न तिष्ठेत् ॥ चतुर्थमश्नन्तो गत्वापरेण दहनदेशं प्रेतं निधाय उदञ्चो गच्छन्ति । "एषा वै देवमनुष्याणां शान्ता दिक् । तामेवैनाननुत्क्रामन्ति" इति जपित्वा यज्ञोपवीतानि निरस्य प्रत्येत्यार्द्रया पलाशशाखया शमीशाखया वा अपेत वीतेति दहनदेशं संमृज्य, दक्षिणतश्शाखां निरस्य अप उपस्पृश्य उद्धत्यावोक्ष्य, तत्र हिरण्यशकलं निधाय तस्मिन्दक्षिणाग्रान् दर्भान्संस्तीर्य तेषु दक्षिणाग्रैर्याज्ञियैः (कैः) काष्ठैरशूद्रैरनाहृतैः दारुचितिं कृत्वाग्निं पुरस्तान्निधाय दक्षिणाग्रैः प्रागग्रैर्दर्भैरग्निं प्रेतं दारुचितिं च परिस्तीर्य, दक्षिणतः पश्चाद्वा दर्भान् संस्तीर्य तेषु दक्षिणाप्राञ्चैकैकशः स्रुचमाज्यस्थालीं प्रोक्षणपात्रं स्रुवं च सादयित्वा, अङ्गुष्ठशुक्लसूत्रे छित्वा, आसंदीरज्जुं छित्वा, अप उपस्पृश्य रज्जुखंडमादाय चितेः पश्चादास्तीर्य, तेषु कृष्णाजिनं पूर्ववदास्तीर्य, तस्मिन्प्रेतमुत्तानं त्वेकपवित्रेण प्रोक्षणीस्संस्कृत्य, प्रेतं पात्राणि दारुचितिं च प्रोक्ष्य, आज्यं संस्कृत्य भुवनस्पत इदं हविरिति यजुषा राजगवीं चितिसमीपं गमयित्वा, स्रुक्स्रुवौ संमृज्य, अग्निं तूष्णीं परिषिच्य, स्रुवेणाज्यमादाय स्रुचि संपूर्य 'अग्नये रयिमते स्वाहा' इति एकामाज्याहुतिं हुत्वा पूर्ववत्परिषिच्य, कनिष्ठपूर्वा ज्ञातयः अन्वारभन्ते ॥

एवं सङ्घाहने संसर्पणोदकोपस्पर्शनारोहणान्वारम्भेषु 'अपश्याम युवतिम्' इति तिसृभिरप्रदक्षिणं राजगवीं दर्भमयीं वाग्निं प्रेतं दारुचितिं च परिणीय "ये जीवा" इत्यभिमन्त्र्य 'माता रुद्राणाम्' इति जपित्वा 'ओं उत्सृजत' इति राजगवीमुत्सृजति । परिणयनाद्युत्सर्जनान्तं सर्वे कुर्युः । 'सुवर्णं हस्तात्' इति प्रेतस्य हस्तौ सुवर्णेन संमृज्य, प्रेतं चितावुपर्युत्तानं निपात्य, पत्नी यद्यनुगच्छेत् 'इयं नारी पतिलोकम्' इति पत्नीं प्रेतस्य पाददेशे वामपार्श्वे चितेरुपरि निपात्य, तदादि समानतन्त्रेण अग्निप्रदान-उपस्थान-होममन्त्रानूहेन द्विवचनलिङ्गेन कुर्यात् । वाङ्नासिकारंध्रे नेत्रकर्णविवरेषु गुह्यशिश्ननाभिषु हिरण्यशकलान् प्रत्यस्यति । आज्यबिन्दून्वा आधास्य तिलतण्डुलान् प्रक्षिपेत् ॥ ४६ ॥

इति षट्चत्वारिंशः खण्डः ॥

## अथ सप्तचत्वारिंशः खण्डः

### अथ अग्निप्रदानम्

अथैनं 'मैनमग्ने' इति द्वाभ्यां चितेः पुरस्ताद्दक्षिणामुखस्तिष्ठन्, औपासनाग्निं दक्षिणेंऽसे पुरस्ताच्चितौ वा निधाय; 'सूर्यन्ते चक्षुरिति' प्रेतमुपस्थाय, अपरेण चितिमजमबलेन शुल्वेन दर्भमयेन संबध्य, तदभावे दर्भमयं वा 'अजो भाग' इति द्वाभ्यां दाहभयात्पलायमानं

अनुमन्त्रयते । अग्निं परिषिच्य चितेः पुरस्ताद्दक्षिणामुखस्तिष्ठन्, स्रुवेणाज्यमादाय 'य एतस्य पथो गोप्तारः' इति शतिमन्त्रं नव स्रुवाहुतीर्हुत्वा मन्त्रोपात्तदेवता अन्ते यमाय राज्ञ इति त्यागः ॥

धनिष्ठापञ्चकर्क्षेषु मृतेषु मुखे हिरण्यं निधाय वह वपामिति मन्त्रावृत्त्या तिस्रः स्रुवाहुतीर्जुहोति । 'जातवेदस' इति त्यागः । स्रुक्स्रुवावग्नौ प्रहृत्याज्यस्थालीं नाभौ विन्यस्याग्निं परिषिच्य चन्दनकाष्ठादिपरिमळद्रव्यं यथाशक्ति चितौ निदधाति । न नग्नं नाधोमुखं प्रेतं दहध्व-मिति वाहकान् संप्रार्थयेत् । तेपि उपोषणं दहनं कुर्युः । चितेः पश्चात्प्राङ्मुख उपविश्य नवसंख्या-न्नवदर्भान् गृहीत्वा प्रेतं प्रकेतुनेति नवर्चेन याम्येन सूक्तेन प्रत्यृचं प्लुतप्रणवान्तेन पराचानुशंसति । एकैकं दर्भं प्रणवान्ते प्रेतस्योपरि प्राच्यां निरसेत् । अपरेणाग्निमुदगायताः प्रागारभ्य प्रत्यस्ता-स्तिस्रः कर्षूस्त्रीन् दीर्घावटान् खात्वा तेषु सूक्ष्मपाषाणान् सिकताश्च क्षिप्त्वाऽयुग्भिरुदकुम्भैरानीताद्भिः पूरयित्वा 'अश्मन्वतीरेवतीरिति' कनिष्ठप्रथमाः स्त्रीपुरस्सराः ज्ञातयस्संगाहन्ते ॥

ततः कर्ता दक्षिणभुजे पूर्णकलशं निधाय रंध्रत्रयान्वितकलशेन उदकं सिंचन् त्रिरप्रदक्षिणं चितिं परीत्य चितेर्दक्षिणतोऽनवेक्षमाणः पृष्ठतः कलशमवभज्यानवेक्षमाणः (प्र)व्रज्यावटानां पश्चिमतो दक्षिणोत्तरयोः पलाशशाखे शमीशाखे वा खात्वा तदग्रयोस्तोरणवद्दर्भमयेन शुल्बेन संबध्य प्रत्यङ्मुखा यद्वै देवस्येति तयोरन्तरेण सर्वे ज्ञातयः कनिष्ठपूर्वास्संसर्पन्ति । सर्वे पृष्ठतोनुगच्छन्तः 'या राष्ट्रात्पन्नादि'ति तोरणशाखे उत्पाट्य निरस्याऽप उपस्पृश्य 'उद्वयं तमसस्परी'ति यज्ञोपवीतिनः सर्वे आदित्यमुपस्थायानवेक्षमाणाः प्रेतस्थानान्नद्यादितीरं गत्वाऽवगाहन्ते ॥

शाद्वलदेशे स्थित्वा दाहकेभ्यो विदग्धप्रेतवार्तां श्रुत्वा केशान्प्रकीर्य पांसूनावपन्ते । ब्राह्मणेभ्यो दक्षिणां दत्वा तैरनुज्ञाताः सर्वे ज्ञातयः कण्ठादुपरि केशान्वापयेयुः । [1]आर्द्रामलकमात्रं श्वेतं रक्तं वा पाषाणमादाय ब्राह्मणैरनुज्ञातः प्राणानायम्य शिलास्थापनं करिष्य इति संकल्प्य कृच्छ्रत्रयं कृत्वा शिलां केशत्रादिभिः(नामभि)रभिषिच्य दर्भेण संवेष्ट्य अवटे दर्भास्तृते निदधाति । तस्मिन् उक्तं प्रेतमावाह्य ब्राह्मणानुज्ञां लब्ध्वा उक्तस्य तापोपशमनार्थं मृदा स्नानं तृष्णोपशमनार्थं तिलोदकं क्षुदुपशमनार्थं पिण्डदानं च करिष्य इति संकल्प्य, पूर्णपाणितिलतण्डुलं तदर्धमुद्गैस्सह पिण्डार्थं श्रपणं कृत्वाभिघारयेत् । कनिष्ठपूर्वं 'धाता पुनात्विति' शरीरे मृदमनुलिप्य एकवाससो दक्षिणामुखाः सकृदुपमज्योत्तीर्य सव्यं जान्वाच्य तिलदर्भसंयुतवासस्त्रिगुणीकृत्य स्वसंबन्धमुच्चार्यामुक-गोत्रायामुकशर्मणे प्रेताय दहनजनिततापोपशमनार्थं एतद्वासोदकं उपतिष्ठत्विति शिलायां पीडयेयुः ।

---

१ यल्लाजीये शिलालक्षणम् —

ततश्शिलां समादाय चतुरंगुलमायताम् । नातिह्रस्वां नातिदीर्घां स्फुटितां तु परित्यजेत् ॥
रक्तं श्वेतं तु पाषाणं वर्णानामुत्तमोत्तमम् । बहुवर्णं नीलवर्णं पाषाणं तु परित्यजेत् ॥
पाषाणस्य प्रमाणं तु आर्द्रामलकमात्रकम् । न चाधिकं नैव हीनं प्रवदन्ति मनीषिणः ॥

एवं त्रिरपि वा युगपदेव त्रिर्निमज्य त्रिर्वासः पीडयेयुः । एवं प्रतिदिनं आदशाहादेवमेव (चतुर्थी) विभक्त्या तृष्णोपशमनार्थमेतत्तिलोदकमुपतिष्ठत्विति शिलायां प्रथमेऽहनि त्रींस्त्रीनुदकांजलीन् परेद्युरेवमहरहरह्रोंजलिनैकोत्तरवृद्ध्या कनिष्ठपूर्वं दद्युः ॥

अथ कर्ता सन्निधौ शिलायाः दक्षिणाग्रान्दर्भानास्तीर्य दर्भे वा तत्र तिलोदकं निनीय शिलायै गन्धपुष्पादिकं समर्प्य पूर्ववच्चतुर्थीविभक्त्या क्षुदुपशमनार्थं प्रथमेऽहनि कर्तव्य एष पिण्डः उपतिष्ठत्विति दर्भे पिण्डं दत्वा, पिण्डस्योपरि दधिमधुघृतशृङ्गिबेरादिकं दत्वा तस्योपरि तिलोदकं निनीय वर्तमानमुक्त्वा एतस्मिन्नहनि उक्तमुद्दिश्य स्वेन कृतैर्मृदास्नानवासोदकतिलोदकापिण्डप्रदानैश्च उक्तस्य तापोपशमनं तृष्णोपशमनं क्षुदुपशमनं चास्त्विति उक्त्वा प्रणमेत् ॥

किञ्च प्रेतनिमित्तं प्रत्येकं सङ्कल्प्य समर्पणं च कुर्यात् । उक्तप्रेत गृध्रवायसमुखेन भुंक्ष्व इत्युक्त्वा वायसादिभक्ष्याभावे तं पिण्डमुदके निधाय स्नानं कुर्यात् । एवं दशाहपर्यन्तं प्रतिदिनमेकस्मिन् तीरे एकस्थाने एकस्यां शिलायां एकद्रव्येण एकपात्रेण पिण्डदानमेकः कर्ता कुर्यात् । एतेषामेकस्य वा विपर्यासे वासोदकार्थं धृतवस्त्रस्य वा शिलायाः नाशे शिला(याः)स्थानाच्चलने कृच्छ्रत्रयं कृत्वा नष्टं पूर्ववत्पुनस्संपाद्य प्रथमादिनादितत्पर्यन्तं पुनस्तिलोदकपिण्डदानानि कुर्यात् । पिण्डे श्वादिचण्डालादिभिः स्पृष्टे एवमेव कुर्यात् । दशाहाभ्यन्तरे रौकादिभिरसेवितेप्येववेव । यदि नष्टा शिला पुनर्दृष्टा चेद्यमे इव यतमान इति शिलाद्वयं (सं)स्थाप्य तदादि तिलोदकपिण्डान्दद्यात् ॥

ततः कनिष्ठपूर्वाः स्त्रीपुरस्सरा अप्रतीक्षमाणा गृहानेत्य यत्त्रिय, आहुस्तत्कृत्वा निवेशनदेशे सहैव गत्वा बंधून् प्रियोक्तथादिभिर्विसृज्य कर्तादयः पादौ प्रक्षाल्य निम्बपत्रं आज्यं (च) प्राश्याचम्य गोशकृत्सुवर्णापोग्निसर्षपसर्पिर्व्रीहींस्तत्तत्पृष्ट्वाश्मनि पदं शनैर्निधाय सह प्रदीपेनागारं प्रविश्योत्क्रांतिदेशे वत्समाक्रमयित्वा यवोदकेन संप्रोक्ष्य स्वस्त्यस्तु गृहान् शेषं शिवं चास्त्विति तिलतण्डुलव्रीहीन् प्रकीर्य मरणभूमौ हिरण्मयकलशं निधाय तद्भूमेरुपरि शिक्यद्वयं बध्वैकस्मिन्कलशे पयांसि निधाय अन्यस्मिन्कलशे उदकं निधाय शिक्यद्वये कलशे निधाय अत्र स्नाह्यत्र पिबेति (सं)प्रार्थ्य वृद्धपूर्वकं गृहान्निर्गच्छेयुः । निष्क्रमणकालेथ नग्नश्राद्धं वासस्तण्डुलमुदकुम्भं कांस्यपात्रं तिलं लवणं घृतं च प्रेतमुद्दिश्य ब्राह्मणाय दद्यात् । नग्नप्रच्छादनमेकोद्दिष्टविधानेन समन्त्रकं कुर्यात् इत्येके । नवश्राद्धान्येवमेव विषमदिनेषु षट् कुर्यात् ॥ ४७ ॥

इति सप्तचत्वारिंशः खण्डः ॥

## अथ अष्टचत्वारिंशः खण्डः

### अथास्थिसञ्चयनम्

अथास्थिसंचयनमपरेद्युः तृतीयस्यां पञ्चम्यां सप्तम्यां वाऽऽज्यं प्रोक्षणीं आज्यस्थालीं स्रुक्स्रुवौ लाजापूपवटकादियुक्तं चरुं गन्धाक्षताभ्यंजनोदुम्बरशाखाग्नीन् तिलान् दर्भान् निधानार्थं कुम्भमपिधानं च बृहतीफलं नीललोहिते सूत्रे आमश्राद्धार्थं च तंडुलान् पयः पञ्चगव्यं दात्रं पानार्थमुदकुम्भं येन चान्येनार्थी भवति तदप्यादाय बन्धुभिस्सह श्मशानं गत्वा स्नात्वा ब्राह्मणानुज्ञां लब्ध्वाऽस्थनश्चंडालश्वानसृगालादीनां स्पर्शदोषनिवारणार्थं कृच्छ्रत्रयं कृत्वा, पञ्चगव्येन प्रोक्ष्य पुनस्संकल्प्य, एतस्मिन्नहनि एतस्यास्थिसंचयनं करिष्य इति संकल्प्य, क्षीरमिश्रोदकेन उदुम्बरशाखया प्रकादयन् पाददेशे दक्षिणामुखस्तिष्ठन् 'यं ते अग्निममन्थामेति' पञ्चभिस्सकृदस्थीन्यवोक्ष्य अत एवाङ्गारान् दक्षिणान्निर्वृत्य स्रुवसंमार्जनांतेग्निं परिषिच्य अवसृजेति प्रतिमन्त्रं तिस्रः स्रुव आहुतीर्हुत्वा स्रुवमग्नौ प्रहृत्य पुनः परिषेचनं कुर्यात् । दह्यमाने तु शवे, अग्नौ वर्षादिना शान्ते कृच्छ्रत्रयं कृत्वा पूर्ववद्वह्निमुत्पाद्य मन्त्राद्यावृत्तिं विना तूष्णीमेव शरीरशेषदहनं कृत्वा अस्थिसंचयनहोमं कुर्यात् ।

दहनानन्तरं संचयनहोमात्पूर्वं (अग्नेः) नाशे उपानीतेनाग्निना अग्निनष्टप्रायश्चित्तं कृत्वा स्रुवाहुतीर्जुहुयात् । अयुग्भिरुदकुम्भैः स्ववोक्षितमवोक्ष्य अपगतरजस्काः पञ्च स्त्रियः संचिन्वन्ति । तासामेका सव्ये हस्ते नीललोहितसूत्राभ्यां बृहतीफलमाबध्य सव्येन पदाऽश्मानमास्थाय सव्येन पाणिना प्रथमा अनन्वीक्षमाणोत्तिष्ठात इति दद्भ्यश्शिरसो वाऽस्थीन्यादाय निश्शब्दं कुम्भे निदधाति । इदं त एकमिति द्वितीयांसाभ्यां च, (पर ऊत एकमिति तृतीया पार्श्वाभ्यां श्रोणिभ्यां च, अथ चतुर्थी तृतीयेन ज्योतिषा संविशस्वेति ऊरुभ्यां जङ्घाभ्यां च,) संवेशन इति पञ्चमी पद्भ्यामेवाऽयुजाकारं सुसंचितं संचिन्वन्ति । ततः कर्ता भस्माभिसमूह्य संहृत्य शरीराकृतिं कृत्वा, श्मशानवेदिकापूजां करिष्य इति संकल्प्य शिलात्रयमादाय मध्ये प्रेतराजायोत्तरतो रुद्राय दक्षिणतो यमाय एवं शिलात्रयं कृत्वा उरसः उपरि निक्षिपेत् । मध्ये प्रेतराजाय 'अयं ते क्षण उपतिष्ठत्वि'त्यादि क्षणाद्यासनक्षणाभ्यङ्गस्नानवस्त्रगन्धाक्षतपादुकाछत्रध्वजानि प्रत्येकं दत्वा नाममन्त्रेण पिंडत्रयं उभयतस्तिलोदकपुरस्सरं दत्वा बलिं सोपदंशलाजान् सापूपान् यथाभागं दत्वा अत्र स्नाहीत्युदकुम्भमत्र पिबेति क्षीरघटं च प्रेताप्यायनमस्त्विति शिरसः स्थाने दद्यात् ।

उत्तिष्ठ प्रेहीति अस्थिकुम्भमादाय नदीतीरं गत्वा शम्यां पलाशमूले वाऽवटं खात्वा दर्भानास्तीर्य तूष्णीमस्थिकुम्भं निधाय जघनेन कुम्भं कर्षादिसमानमासमनात् कुम्भभञ्जनवर्जं कुर्यात् ।

## अस्थिनिक्षेपः

अथ गङ्गांभस्यस्थिनिक्षेपः। अस्थिकुम्भं पुनरादाय जलाशयं गत्वा तीरे (सं)स्थाप्य अब्लिङ्गादिभिः पावमानादिभिः शुद्धोदकेन पञ्चगव्यैश्च स्नपयित्वा शरावत्रयं कृत्वा सर्वास्थीनि तेषु शरावेषु निक्षिप्य पुनश्शरावेणाऽपिधाय ब्राह्मणानुज्ञां लब्ध्वा गङ्गांभस्यस्थिनिक्षेपणं करिष्य इति संकल्प्य एकं शरावमादाय नाभिदघ्नजले स्थित्वा —

## अथ श्लोकः

यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥

पृथिवीं गच्छेत्यनन्वीक्षमाणः पृष्ठभागे निश्शब्दं जले निक्षिप्य विष्णुनाम संकीर्तयेत्। एवमितरयोः। ततस्तीरं प्राप्य गोदानदशदानानि कृत्वा पूर्ववत्संकल्प्य चयनांगामश्राद्धं कृत्वा अस्थिकुम्भं भिंद्यात्। क्षीरेण पाणिप्रक्षाळनं कृत्वा मृदा स्नानादि नित्यकर्म कृत्वा ततः कनिष्ठपूर्वं बन्धुभिः सह गृहं प्रविश्य मृतस्थले मुद्गमाषादिबीजानि वापयेत्। दशाहमध्ये दर्शे आगते पितृमातृभर्तृमातामहव्यतिरिक्तानां दशाहांतं तिलोदकपिंडदानाद्यपकृष्य दर्श एव समापयेत्। चतुर्दशीक्षणे मृतेप्येवमेव समापयेत्। दर्शे मृते तिलोदकादिदशाहांतं प्रकृतिवत्कुर्यात्। पित्रोरपि त्रिरात्रादूर्ध्वं दर्शश्चेत्तस्मिन्नहनि समापयेदित्येके। नवश्राद्धं संचयनं यथाकालं कुर्यात्॥ ४८॥

इत्यष्टचत्वारिंशः खण्डः॥

## अथैकोनपञ्चाशः खण्डः

दशाहप्रयोग उच्यते —

अथ प्रातर्दशाहे आनडुहं चर्म वेतसशाखां आज्यमांजनं वारुणस्रुक्स्रुवौ पाषाणत्रयमग्निं तिलदर्भान् बीजांकुराण्यवकासंपातावनयनार्थपात्रं आज्यस्थालीं प्रोक्षणीं हिरण्यमनड्वाहं गन्धांस्तण्डुलान् तिलमिश्रधात्रीपिष्टहरिद्रामिश्रिताक्षतानाम्रशाखाः पुष्पाणि पुण्याहवाचनकलशनिधानार्थपात्रं पूर्वं निधानोदकुम्भं खनित्रं पूर्वत्रचरुं शुद्धताम्बूलान्येतानि गृहीत्वा ज्ञातयस्सर्वे एकग्रामवासिनः पुण्याङ्गना गच्छेयुरुदकान्तिकम्। कर्ता स्नात्वा मृदास्नानादिपिंडप्रदानान्तं कृत्वा ब्राह्मणैरनुज्ञातो वपनार्हान् सर्वान्केशान्वापयेत्। कर्ता स्नात्वा प्राचीनावीती दर्भांस्तिलानादाय ब्राह्मणान् त्रिः प्रदक्षिणीकृत्य तांस्तिलदर्भान् भूमौ निक्षिप्य नमस्कृत्य पितुर्गोत्रस्येत्यादि एतस्मिन्नहनि स्वग्रामवासिभिः अन्यग्रामवासिभिरिष्टैश्शिष्टैर्बान्धवैस्सह भवद्भिर्धर्मोदकं दीयतामिति प्रार्थयेत्। ते

ब्राह्मणा धर्मोदकं प्राचीनावीतिनो मुक्तकेशा आर्द्रवाससो दक्षिणामुखा (यजमानस्य पित्रे) स्वसंबन्धमुक्त्वा गोत्राय शर्मणे प्रेताय ऋणविमोचनार्थं धर्मोदकमुपतिष्ठतु इति भूमौ कुशेषु शिलायां वा तिलोदकानि त्रिर्दद्युः। तेषां तिलनियमो नास्तीति केचित्।

अथ कर्ता यज्ञोपवीती भूत्वा प्राङ्मुख उपविश्य प्राणानायम्य देशकालौ संकीर्त्य पितुर्गोत्रस्येत्यादि दशमेहनि मम ज्ञातीनां च आशौचनिवृत्त्यर्थं अघापनुत्तिहोमं करिष्य इति संकल्प्याप उपस्पृश्य अग्निमुपसमाधाय संपरिस्तीर्य उत्तरेणाग्निं प्रागग्रेषु दर्भेषु चत्वारि पात्राणि प्रयुज्य पवित्रकरणादिस्रुक्स्रुवसम्मार्जनांते अपरेणाग्निं प्रागग्रेषु दर्भेषु लोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोमास्तीर्य कर्ता आरोहतायुरिति वेतसमालिनो ज्ञातीन् कनिष्ठपूर्वान् चर्मण्यारोहयित्वा यथाहानीति वृद्धपूर्वान् प्राङ्मुखानुपवेश्याग्निं समंतं परिषिच्य मूलतोबिलेन स्रुवेण चतुर्गृहीतमाज्यं पूरयित्वा मूलतोबिलया स्रुचा नहिते अग्न इति हुत्वा पुनः पूरयित्वा अपनश्शोशुचदघमिति अग्नये शुचये मृत्यव इति क्रमेण त्यागः। हुतशेषबिंदून् अन्यस्मिन्पात्रे निनयेत्। ऊर्ध्वस्थितदशाहुतिशेषबिन्दूनेवंप्रकारेणान्यस्मिन्पात्रे निनयेत्। अपनश्शोशुचदघमिति दशभिः प्रतिमन्त्रं मूलतोबिलेन स्रुवेण जुहुयात्। दशमन्त्राणां अग्नये शुचय इति त्यागः। उत्तरं परिषिच्य स्रुक्स्रुवावाज्यस्थालीं चाग्नौ प्रहृत्य उत्तरेणाग्निं लोहितमनड्वाहं प्राङ्मुखमवस्थाप्यानड्वाहमन्वारभामह इत्यनड्वाहं कनिष्ठपूर्वा अन्वारभन्त इमे जीवा इत्यनड्वाहं प्राचीं नयन्ति। मृत्योः पदमिति कर्ता वेतसशाखया अवकाभिश्चानडुहः पदानि संमृज्य इमं जीवेभ्य इति ज्ञातिभ्यो दक्षिणतोऽश्मानं निदधाति। इमा नारीरिति जीवभर्तृकस्त्रीणां अञ्जलिषु संपातानवनयति। ताः स्त्रियस्तूष्णीं तदाज्येन मुखं निमृजेयुः। यदाञ्जनमिति [1]अनेनैव चांजनेन चक्षुषी अञ्जीरन्।

ततः कर्ता प्रेतशिलामुत्पाट्य तीरे निधाय गर्तं मृद्भिः पूरयित्वा तदुपरि वेदिकां कृत्वा तस्यां प्रेतपाषाणं मध्ये स्थापयित्वा तस्य उत्तरतो दक्षिणतश्च पाषाणद्वयं स्थापयित्वा पूजां कुर्यात्। पितुः गोत्रस्येत्यादि दशमेहनि वेदिकायां शिलापूजां करिष्य इति संकल्प्य मध्ये प्रेतं उत्तरे रुद्रं दक्षिणे यममित्यावाह्य पाषाणत्रयमभ्यर्च्य अभ्यज्य स्नापयित्वा मध्ये प्रेतराजाय उत्तरतो रुद्राय दक्षिणतो यमाय अयं ते क्षण उपतिष्ठत्विति पाद्याद्यासनाद्यर्घ्यगंधतिला उपतिष्ठन्त्विति पुष्पाण्युपतिष्ठंतु लाजा उपतिष्ठंतु कंटकादिनिर्हरणार्थं पादुके उपतिष्ठेतां वर्षातपनिवारणार्थं छत्रमुपतिष्ठत्वित्यन्नापूपसूपाद्यैः पिण्डत्रयं कृत्वाप्रतस्तेभ्यः बर्हिषि एकैकं पिण्डमुत्सृजेत्[2]। मध्ये प्रेतराजाय

---

1. अनैवकेन

2. तथाच यज्ञाजीये:--

दद्यात्पिण्डत्रयं चापो दक्षिणो यमदैवतः।
मध्ये प्रेताय चोत्सृज्य रौद्रमुत्तरबर्हिषि ॥ इति ॥

एष पिण्ड उपतिष्ठत्विति उत्तरतो रुद्राय दक्षिणतो यमायेति पूर्ववद्दत्वा तिलाम्बु निनीय सर्वेभ्यो भूतेभ्यः इमं बलिं ददामीति बलिं दद्यात्। यथा त्वमुद्भिनत्स्योषध इति वेद्याः परितः बीजांकुराणि निदध्यात्। तन्मूले शैवालमुदकुंभं निधाय शिलारूपाय प्रेताय उपहारं दद्यात।

ब्राह्मणैरनुज्ञातः प्राणानायम्य एवं गुणेत्यादि पितुः गोत्रस्य शर्मणः प्रेतस्य मरणदिनादारभ्य दशाहपर्यन्तमर्चितशिलापात्रोद्वासनं करिष्य इति संकल्प्य कृच्छ्रत्रयं कृत्वा गोमूल्यं दशदानं च कृत्वा शिलात्रयमादाय दर्भे विन्यस्य जले प्रविश्य "यावच्छिला मनुष्याणा"मिति पृथिवीं गच्छेत्य-प्रतीक्षमाणः पृष्ठभागे निश्शब्दं विसृजेत्। ततस्सर्वे धर्मोदकदातारः सामात्यं कर्तारमालिंगने-नाश्वासयेयुः। विष्णुनाम संकीर्त्य ज्ञातिभिस्सह कर्ताऽऽमलकस्नानं कुर्यात्।

पूर्ववत्प्राणानायम्य पितुर्गोत्रस्येत्यादि दशमेहन्यमंगळनिवृत्त्यर्थं आनन्दहोमं करिष्य इति संकल्प्य यज्ञोपवीत्यग्निं परिस्तीर्य पूर्ववत्स्रुक्स्रुवसंमार्जनांते परिषिच्याप्रतोविळया वारुण्या स्रुचा तथैव स्रुवेण द्वे चतुर्गृहीते जुहोति। आनन्दाय नवैतन्त्रेत्यग्नये शुचय इति त्यागः। स्रुक्स्रुवावाज्य-स्थालीमग्नौ प्रहृत्य उत्तरं परिषिच्य यवोसीति यजुषा यवोदनं ज्ञातयः प्राश्नन्ति। एष प्रथमो-लङ्कारः। नारीणां स्त्रीलिंगांतेनैव प्रेतवपनवर्जं सर्वं पूर्ववत् कुर्यात्। सर्वे नववस्त्राणि धारयेयुः॥

ततो वरुणं संपूज्य पुण्याहं वाचयेत्। गंधाक्षतदक्षिणातांबूलानि ब्राह्मणेभ्यो दत्वा स्वगृहान् प्राप्तुमिच्छन्तः (गच्छेयुः)। तथा च श्लोकाः —

पानीयपल्लवोपेतं हरिद्राक्षतशोभितम्।
कुंभं ताम्रमयं गंधपुष्पमालाविभूषितम्॥

अनंतपाणिना धार्यं धारयन्तीमलंकृताम्।
पुण्याङ्गनां पुरस्कृत्य माङ्गल्यध्वनिपूर्वकम्॥

गच्छेयुः स्वगृहान्सर्वे पुरुषा वृद्धपूर्वकम्॥ इति ॥ ४९ ॥

इत्येकोनपञ्चाशः खण्डः॥

## अथ पञ्चाशः खण्डः

### अथ वृषोत्सर्जनप्रयोगः

अथ वृषोत्सर्जनम् — एकादशाहेकर्ता संगवे स्नात्वा पुण्याहं वाचयित्वा नवश्राद्धं कृत्वा होमप्रदेशं गृहं च गोमयेनानुलिप्य प्राणानायम्य पितुर्गोत्रस्येत्याद्येकादशेहनि प्रेतत्वविमुक्त्यर्थं पिशाचत्वनिवृत्त्यर्थं (च) वृषोत्सर्जनं करिष्य इति संकल्प्य यज्ञोपवीत्येव कुर्यात्। शिवस्त्वष्टरिति द्वाभ्यां गोमिथुनमभिमन्त्र्य अग्नींधनाद्यग्निमुखान्तं कृत्वा (गृहपाकं) चरुमादायावदानधर्मेण जुहुयात्। मयोभूर्वात इति चतसृभिः इह धृतिरिति चतसृभिर्महीमूषुमातरꣳसुव्रतानां सुत्रामाणं पृथिवीमिति द्वाभ्यां चर्वाहुतिं स्विष्टकृतं च हुत्वा द्वौ चतुर्णां मन्त्राणां रुद्राय पर्जन्यायेन्द्राय प्रजापतय इति क्रमेण त्यागः उत्तराभ्य इति। उत्तराणां चतुर्णां धृत्यै विधृत्यै रंत्यै रमत्यै (इति त्यागः)। अंत्ययोरनयोरदित्यै (इति त्यागः।) समित्सन्नहनं परिधिप्रहरणादि जयादिब्रह्मविसर्जनांते हुतशेषं चरुमादाय अग्नेः पूर्वदिश्यस्य अष्टभिर्ग्रासैः पूर्वाद्यष्टदिक्षु अर्कपत्रेष्वौदुंबरपत्रेषु वा पिंडैरग्नेरलंकरणं कुर्यात्।

ओं भूर्भुवस्सुवः दिशो वो मिथुनं मानो मिथुनं रीढ्व इति जपित्वा गोमिथुनं वस्त्रादिभिरलंकृत्य भ्राजमानानामित्यनुवाकमामावो अग्मन्निति सूक्तं रुद्रं च जपित्वा तुभ्यमग्न इति तिसृभिर्गोमिथुनमग्निं त्रिः प्रदक्षिणीकृत्य एतं युवानमिति पंचभिर्गोमिथुनं द्वित्रिपदानि वा प्राक्प्रदेशं गमयित्वा वृषभस्य बुद्धिमुपदिशेत् — "हे वृषभराज! पूर्वस्यां दिशि देवब्राह्मणक्षेत्राणि परित्यज्य पर्वतोत्थितं घासं भक्षयित्वा तत्र समुद्रोदकं पीत्वा गवांपतिर्भूत्वा यथेच्छं विहर" इति। एवं दक्षिणपाश्चिमोत्तरासु। हुतशिष्टाज्येन वृषभस्य दक्षिणोरौ त्रिशूलं विलिखेत्। तस्य वामोरौ लिङ्गमुद्रां विलिख्य तपनं कारयित्वा पूर्णपात्रमादाय आपो हिष्ठा मयोभुव इति तिसृभिः हिरण्यवर्णा इति चतसृभिः पवमानस्सुवर्जन इत्यनुवाकेन समुद्रज्येष्ठा इत्यद्भिर्मार्जयेत्। एवंगुणविशिष्टायां तिथौ पितुर्गोत्रस्य शर्मणः प्रेतस्य प्रेतत्वनिवृत्त्यर्थं एष वृषः मया उत्सृष्टः इति ऋषभंमासमानानामिति जपित्वा वृषभस्य लोमरुधिरत्वग्दाहदोषनिर्हरणार्थं वस्त्राज्यतिलोदकुम्भदानानि कुर्यात्, एष वृषोत्सर्गः॥ ५०॥

इति पञ्चाशः खंडः॥

## अथैकपञ्चाशः खण्डः

### एकाहप्रयोगः

अथैकाहं — पुरुषाहारप्रमाणं समुद्रशाकादिभिः चरुश्रपणं कृत्वा सङ्गवातीते चर्वादीनादाय ग्रामाद्बहिर्देवालये नदीतीरेऽश्वत्थमूले वा कुण्डं खात्वा, समस्तसंपदित्याद्यच्युतं पदमित्यन्तमुक्त्वा (भूमौ) तिलदर्भान्निक्षिप्य, प्राचीनावीती पितुर्गोत्रस्येत्यग्नावाद्यैकोद्दिष्टश्राद्धं कर्तुं अधिकारसंपद-

स्त्विति वदेत् । प्राणानायम्य वर्तमानमुक्त्वा पितुः गोत्रस्य शर्मणः प्रेतस्य मरणादिनादारभ्य एकादशेहनि प्रेततृप्तिद्वारा प्रेतत्वविमुक्त्यर्थं आद्यमासिक एकोद्दिष्टश्राद्धं एकोद्दिष्टविधानेन ब्राह्मणाभावे अग्नौ करिष्य इति संकल्पयेत् । दर्भैरपेतवीतेति कुण्डं मध्यं विमृज्याभ्युक्ष्य लौकिकाग्निं प्रतिष्ठाप्य तिलदर्भानादाय पितुर्गोत्रस्य शर्मणः प्रेतस्य अग्नावेकोद्दिष्टश्राद्धे अयं ते क्षणः उपतिष्ठतु इति क्षणं दद्यात् । एवं सर्वोपचारेषु मासिकमुच्चार्य उपतिष्ठत्विति कुर्यात् ।

गोमयेनोपलिप्तदेशे वर्तुलमण्डले गन्धतिलैरभ्यर्च्य पितः गोत्र शर्मन् प्रेत इदं ते पाद्यमिति तिष्ठन्पादप्रक्षालनं कुर्यात् । पितर्गोत्र इत्यादिविष्टरं दत्वा अपहता इत्यादि यत्रास्य गतं मन इत्यूहेन तिलान्विकिरेत् । उदीतामवरोन्मध्यमः प्रेतस्सोम्य असुं य इयायावृक ऋतज्ञ सनोवतु प्रेतोहवेत्यूहेन तिलाद्भिरवोक्ष्यापवित्रात्मानं प्रोक्षेत्यादि श्राद्धयोग्या भवंत्वित्यन्तं उक्त्वा पितुर्गोत्रस्य इत्याद्यासनमुपतिष्ठतु, एवमेत्र प्रकृतश्राद्धे क्षणः कार्यः इति वदेत् । तथेति प्रत्युक्ते प्राप्नोतु भवानिति कर्ता वदेत् । प्राप्नवानीति प्रतिवचनम् । अग्नेः पुरतोऽर्घ्यपात्रमासाद्य प्रकृतवत्कुर्यात् । शन्नोदेवीरित्यन्ते प्रेताय वो जुष्टं गृह्णामीत्यर्घ्यग्रहणम् । तिलोसीति मन्त्रे गोसवे देवनिर्मितः प्रेत एहीत्यूहः । सर्वत्र स्वधाशब्दवर्जं पितरं गोत्रं शर्माणं प्रेतं इमान् लोकान्प्रीणयाहीति तिलावपनम्; नावाहनम् । उपतिष्ठतामित्यर्घ्यं निवेद्य यादिव्या इत्यन्ते पितर्गोत्र इत्याद्यर्घ्यपात्रं न्युब्जं कृत्वा "इहलोकं परित्यज्य गतोसि परमां गति"मिति मूर्धादिपादान्तं तिलैरभ्यर्चयेत् । धूपदीपवर्जं 'यथाविध्यर्चितं' इत्यन्तं कुर्यात् । भोजनपात्रे प्रसार्य घृतप्लुतमन्नमादाय प्रेताहुतिं होष्यामीति संकल्प्य अग्नेर्दक्षिणतः किंचिदङ्गारान्निरूह्य परिस्तीर्य परिषिच्य मेक्षणेनादायाऽभिघार्य पित्रे गोत्राय शर्मणे प्रेतायाऽमुष्मै यमाय स्वाहेति प्राचीनावीती जुहुयात् । यमायेति त्यागः । पुनः परिषिच्य हुतशेषं पिण्डे नियोजयन्ते ।

भोजनपात्रेन्नादिपरिवेषणं कृत्वान्नसूक्तजपं कुर्यात् । पृथिवीतेपात्रमित्याद्यूहेनैकवचनेन ब्राह्मणपदस्थानेग्निपदं प्रयोजयेत् । पांसुर इत्यंते पितर्गोत्र इत्याद्येतत्ते अन्नं सपरिकरं प्रेतो देवता इदमन्नं सोपस्करं सव्यञ्जनं सपरिकरं सदक्षिणाकं सतांबूलं पित्रे गोत्राय शर्मणे प्रेताय सतिलापिधानउदकुम्भं प्रेततृप्तिद्वारा प्रेतत्वविमुक्त्यर्थमुपातिष्ठतु इति तिलोदकं निनयेत् । वर्तमानमुक्त्वा पितरं गोत्रं इत्याद्युद्दिश्य स्वेन क्रियमाणेन पितुर्गोत्रस्येत्यादिप्रेततृप्तिद्वारा प्रेतत्वविमुक्त्यर्थमुपतिष्ठत्विति तिलोदकं विसृजेत् । तूष्णीं समन्तं परिषिच्य अन्नं गायत्र्या प्रोक्ष्य परिषिच्याऽपोशनं दत्वा प्राणाय स्वाहेति पंचप्राणाहुतीर्जुहुयात् । यत्ते कृष्णश्शकुन इति मन्त्रं पुनः पुनरुच्चार्य हस्तेन द्वात्रिंशत्कवळान् अग्नौ जुहुयात् । अग्नीषोमाभ्यामिति त्यागः । उत्तरं परिषिच्य ब्राह्मणभोजनपक्षे इमं मन्त्रं द्वात्रिंशद्वारं प्रतिकवळं अनुमंत्रयेत् । भोजनांते पितर्गोत्रेत्यादि इयं ते तृप्तिरिति भूमावन्नं दत्वा उत्तरापोशनं दद्यात् ।

प्राणानायम्य पितुर्गोत्रस्येत्यादि प्रकृतश्राद्धे पिंडप्रदानं करिष्य इति संकल्प्य पिंडस्याधः दर्भासनमुपतिष्ठत्विति दर्भं निधाय मार्जयतां मम पितः प्रेतः इति तिलोदकं निनयेत्। तिलोदकमुपतिष्ठत्विति वा। पित्रे गोत्रायेत्यादि प्रकृतश्राद्धे एष पिंडः उपतिष्ठत्विति दत्वा पूर्ववत्तिलोदकं निनयेत्। वर्तमानमुक्त्वा पितुर्गोत्रस्येत्यादि एतस्मिन्नहनि पितरं गोत्रं शर्माणं प्रेतमुद्दिश्य स्वेन कृतेन श्राद्धेन पिण्डप्रदानेन पितुर्गोत्रस्य शर्मणः प्रेतस्य प्रेततृप्तिद्वारा प्रेतत्वविमुक्त्यर्थं उपतिष्ठत्विति तिलोदकं विसृजेत्। हस्तप्रक्षाळनार्थं उदकं दत्वा आचान्ते हस्तोदकं दत्वार्घ्यपात्रमुत्तानं कृत्वा दत्तं श्राद्धमभिरम्यतामिति हस्ते तिलोदकं दद्यात्। अभिरमतास्म इति प्रत्युक्ते प्रणिपत्य विसृज्य पिण्डमप्सु प्रास्य स्नात्वा पुण्याहं वाचयित्वा कर्ता हुतस्य भस्मीभावापत्तिपर्यन्तं तत्रैव तिष्ठेत्।

ततः कर्ता गृहान् प्रत्येत्य पुनर्ब्राह्मणं निमन्त्र्य पृथक्पाकेन समस्तसम्पदित्यादिब्राह्मणविसर्जनपुण्याहपर्यन्तं पूर्ववत्कुर्यात्, कबळानुमन्त्रणमेतत्। द्विरावृत्तिरेतच्छ्राद्धं पुनरग्नौ न कुर्यात्, ब्राह्मणभोजनमेव। अपि वा तस्मिन्दिने ऊनादिपञ्चदशश्राद्धैस्सह समानतन्त्रेण एकपाकेन कुर्यादेवमेव शतेनैकोद्दिष्टश्राद्धानि कुर्यात्। तथा च श्लोकः —

नग्नप्रच्छादनं पञ्चसप्ततिषष्ट्च षोडश।
आद्यं सपिण्डीकरणमेकोद्दिष्टानि वै शतम्॥ ५१॥

इत्येकपञ्चाशः खण्डः॥

## अथ द्विपञ्चाशः खण्डः

## अथ षोडशश्राद्धानि

प्रातरेव ब्राह्मणान्निमन्त्र्य स्नातः स्नातानाहूय समस्तसम्पदित्यादिप्रदक्षिणीकृत्याद्यश्राद्धं कर्तुं ममाधिकारसम्पदस्त्वित्युक्त्वा तथैव प्रत्युक्तः प्राणानायम्य * एवंगुण + तिथौ पितुर्गोत्रस्य

---

* अधोनिर्दिष्टप्रकारेणाप्ययं पाठः श्रूयते —

एवंगुणविशेषणविशिष्टायां पुण्यतिथौ प्राचीनावीती पितुः गोत्रस्य शर्मणः प्रेतस्य प्रेतत्वविमुक्त्यर्थं उत्तमलोकावाप्त्यर्थं मरणदिनादारभ्य एकादशेहनि द्विरावृत्ताद्यमासिक एकोद्दिष्टश्राद्धकर्म करिष्यमाणः देहधर्मदेशकालवैपरीत्यशंकया वत्सरान्ते सपिण्डीकरणं कर्तुं अशक्यत्वादायुषः अनित्यत्वाच्च श्वः सपिण्डीकरणं कर्तुकामः तत्पूर्वभावीनि आगामि ऊनमासिक द्वितीयमासिक त्रैपक्षिकमासिक तृतीयमासिक चतुर्थमासिक पञ्चममासिक षाण्मासिक ऊनषाण्मासिक सप्तममासिक अष्टममासिक नवममासिक दशममासिक एकादशमासिक द्वादशमासिक ऊनाब्दिकमासिकाख्यानि स्वे स्वे काले कर्तव्यानि तानि सर्वाण्यपकृष्य वृषभोत्सर्जनाङ्गवसुगणाख्यरुद्रगणाख्य अवशिष्टगणाख्य एकोद्दिष्ट आमश्राद्धानि एकोद्दिष्टविधानेन प्रेतोद्देशेन आवर्ताद्यमासिकेन सह समानतन्त्रेण अद्य करिष्य इति संकल्प्य॥

द्याद्येकादशेऽहनि प्रेततृप्तिद्वारा प्रेतत्वविमुक्त्यर्थं आद्यमासिकश्राद्धं अन्नद्रव्येणाद्य करिष्य इति संकल्प्य, पुनः प्राणानायम्य एवंगुण + तिथौ एकादशेऽहनि देशकालवैपरीत्यशंकया वत्सरान्ते सपिण्डीकरणं कर्तुमशक्यत्वात् श्वः सपिण्डीकरणं कर्तुकामः आगामि ऊनमासिक द्वितीयमासिक त्रैपक्षिक तृतीय-मासिक चतुर्थमासिक पञ्चममासिक षाण्मासिक, ऊनषाण्मासिक सप्तममासिकाष्टममासिक नवम-मासिक दशममासिक एकादशमासिक (द्वादशमासिक) ऊनाब्दिकमासिकाख्यानि पञ्चदश-एकोद्दिष्टश्राद्धानि स्वस्वकाले कर्तव्यानि स्वकालविहितेनाद्यमासिकेन सहापकृष्य रुद्रगणाख्यश्राद्धं च प्रेतोद्देशेन वृषभस्य स्वर्दाहजनितदोषनिर्हरणार्थं वृषभोत्सर्जनब्राह्मणभोजनं अवशिष्टब्राह्मणभोजनं च एकोद्दिष्टविधानेन आद्यमासिकेन सह समानतन्त्रेण एकपाकेन अन्नादिद्रव्येण करिष्य इति संकल्प्य; पूर्ववत्क्षणादि तत्तन्मासिकमुच्चार्य पादप्रक्षालनं कृत्वाचान्तान् विष्टरेषूपवेश्य श्राद्धकर्म करिष्य इति संकल्पयेत्।

अष्टादशार्घ्यपात्राण्यासाद्य पुरतस्सादयेत्, एकं वा। तत्तन्मासिकमुच्चार्याष्टादशार्घ्याणि दत्वा इहलोकं परित्यज्येत्यादि भोजनपात्रप्रसारणान्ते घृताप्लुतमन्नं घृतं चादाय पूर्ववत्संकल्प्य पितुः गोत्रस्येत्यादि वसुगणाख्यान्तश्राद्धेषु भवदनुज्ञया लौकिकाग्नौ प्रेताहुतिं होष्यामीति संकल्पयेत्। पूर्ववत् तत्तन्मासिकमुच्चार्याष्टादशाहुतीर्हुत्वा शेषं पिण्डेषु नियोजयेत्। परिवेषणादि प्रत्येकं प्रत्येक-मन्त्रत्यागं कृत्वा संकल्प्य पितुर्गोत्रस्येत्याद्येकादशेऽहनि पितरं गोत्रं इत्याद्युद्दिश्य मया कृतेनानेनाद्य-मासिकैकोद्दिष्टश्राद्धेन, देशकालवैपरीत्यशंकया श्वः सपिण्डीकरणं कर्तुं ऊनमासिकप्रभृति ऊनाब्दिकाख्यैः स्वस्वकाले कर्तव्यैः पञ्चदशैकोद्दिष्टश्राद्धैः, प्रेतोद्देशेन वसुगणाख्यश्राद्धेन, रुद्रगणाख्यश्राद्धेन अवशिष्ट-ब्राह्मणभोजनेन च पितुर्गोत्रस्य शर्मणः प्रेतस्य प्रेततृप्तिद्वारा प्रेतत्वविमुक्तिरस्त्विति भवन्तो ब्रुवन्तु इति तिलोदकं विसृजेत्। तथैव प्रतिब्रूयुः। परिषेचनादि कारयित्वा आपोशनं प्रदाय पितर्गोत्र शर्मन् प्रेत आद्याद्यवशिष्टपर्यंतेषु प्रेत भुंक्ष्वेति भोजनायातिसृजेत्। तृप्तिरस्त्वित्याद्यष्टादशपिण्डान् पूर्ववद्दत्वोपरितिलोदकाद्यभिरमतामित्यन्तं पूर्ववत् कुर्यात्। सोदकुम्भदक्षिणाताम्बूलानि दत्वा ब्राह्मणान्विसृज्य पिण्डानप्सु प्रास्य स्नात्वा पुण्याहं वाचयेत्॥ ५२॥

इति द्विपञ्चाशः खण्डः॥

## अथ त्रिपञ्चाशः खण्डः

## अथ सपिण्डीकरणम्

सायमौपासनं कृत्वा सर्वे भुञ्जीरन्। पश्चात्कर्ता ब्राह्मणानाहूय प्राणानायम्य, प्राचीनावीती पितुः गोत्रस्य शर्मणः प्रेतस्य मरणदिनादारभ्य एकादशेऽहनि पितुः गोत्रस्य शर्मणः प्रेतस्य तत्पितृ-पितामहप्रपितामहैः गोत्रैः शर्मभिः वसुरुद्रादित्यरूपैस्सह समानोदक सापिण्ड्यसिद्धिद्वारा

वस्त्रादिपितृलोकावाप्त्यर्थं पितुर्गोत्रस्य शर्मणः प्रेतस्य एकोद्दिष्टविधानेन तत्पितृपितामहप्रपितामहानां गोत्राणां शर्मणामित्यादि पार्वणविधानेन एवमुभयात्मकं उभयतोदैविकं कालकामसंज्ञिकविश्वदेवपूर्वकं [1]विष्णवन्वितं पितुर्गोत्रस्य शर्मणः प्रेतस्य सपिण्डीकरणाख्यश्राद्धमन्नद्रव्येण श्वः करिष्य इति संकल्पयेत् ।

विश्वेदेवार्थं द्वौ ब्राह्मणावुपवेश्य समस्तसम्पदित्याद्यधिकारसम्पदस्त्वित्युक्तिं कृत्वा, देशकालौ संकीर्त्य पूर्ववत्सङ्कल्प्य पूर्ववन्निमन्त्र्य दक्षिणापवर्गं गोमयेनोपलिप्य, उत्तरतो देवार्थं चतुरश्रं, तद्दक्षिणतः प्रेतार्थं त्रिकोणं, तद्दक्षिणतः तत्पित्राद्यर्थं वर्तुलमेवं मण्डलत्रयं कृत्वा निमन्त्रणक्रमेण पादप्रक्षाळनादि प्रवर्तय इत्यन्तं कुर्यात् ।

विश्वेषां देवानां आसनाच्छादनान्तं दर्शवदभ्यर्च्य, ततः पित्रादीनां चतुर्णां आसनादि प्राप्नवानीत्यन्तं क्रमेण कुर्यात् । प्रेतस्य दक्षिणाग्रैः दर्भैः प्रेतार्घ्यपात्रमासाद्य तस्मिन् एक (दर्भकं) पवित्रं निधाय तत्पश्चिमतो दक्षिणाग्रान्दर्भान् आस्तीर्य तेषु दक्षिणापवर्गाणि त्रीणि अर्घ्यपात्राणि दर्भत्रयपवित्रयुक्तानि पित्रर्थानि च सादयित्वा पात्राण्युत्तानानि कृत्वा प्रोक्ष्य प्रेतपात्रे तिलान् विकीर्य इत्याद्युपतिष्ठतामर्घ्यं इत्यन्तं पूर्ववत् कुर्यात् ।

पितृपात्रेषु तिलान्विकीर्य । "आम आगंत तत्पितृदेवयानान्" "तत्पितामहदेवयानान्" "तत्प्रपितामहदेवयानान्" इत्यूहेन प्रतिपात्रमुदकं निनीय, तिलोसीति तिलान्निक्षिप्य मधुवाता इति प्रतिपात्रं मधु निक्षिप्याघ्यपात्रेषु तृणानि प्रत्यस्य सोमस्य त्विषिरसीति पंचभिरङ्गुलीभिः प्रतिपात्रं प्रदाक्षिण्यं आलोड्याऽऽवेष्टा दंदशूका तत्तृणानि गृहीत्वा निरस्तं नमुचेश्शिर इति मंत्रेण दक्षिणतो निरस्याप उपस्पृश्य शन्नो देवीरित्यभिमंत्र्य गन्धाद्यैरभ्यर्च्य आयाहि प्रेत सोम्या गंभीरैः इति प्रेतमावाहयेत् ।

प्रकृतिवत्तत्पितॄनावाह्य लौकिकाग्नेरुल्मुकमादाय प्रेतस्य पुरतो निधाय तद्दक्षिणतस्सव्यपाणेरंगुष्ठोपकनिष्ठिकाभ्यां अनवेक्षमाणो ये पार्थिवास इति पृथिवीमभिमृशेत् । पूर्ववत्संकल्प्य वस्त्रादिपितृलोकावाप्त्यर्थमित्यन्ते पितुर्गोत्रस्य शर्मणः प्रेतस्य [2]पात्रस्थोदकं तत्पितृपितामहप्रपितामहानां गोत्राणां शर्मणां वसुरुद्रादित्यरूपाणां पात्रस्थोदकैस्सह सम्योजयेत् । अनुज्ञातः कृच्छ्त्रयं कृत्वा प्रेतपात्रस्थोदकं किंचिद्गृहीत्वा समानीव आकूतिरिति द्वाभ्यां पितः गोत्र शर्मन् प्रेत, त्वत्पात्रस्थोदकं तत्पित्रा गोत्रेण शर्मणा वसुरूपेण सह एष तेऽर्घ्यभागः संयुक्तः तस्मै ते स्वधा नमः इत्यपश्यन् तत्पितृपात्रे निनीय ये समाना ये सजाता इति द्वाभ्यां संसृष्टमर्घ्यमभिमन्त्र्य विष्णुस्मरणं

1. विष्णवन्तं 2. पाठभेदः — त्वदर्घ्यभागप्रथमद्वितीयतृतीयांशान् ।

कुर्यात्; एवमितरयोः । किंचिदवशिष्टं निनयेत्त्वत्पितामह त्वत्प्रपितामहेति मन्त्रसन्नामः । प्रेतपात्रावशिष्टोदकं तद्विप्रहस्तेऽर्घ्यादिधूपदीपसहितमेकोद्दिष्टवत्कुर्यात् । तत्पित्रादीनामर्घ्यादि प्रकृतिवत्कुर्यात् । विष्णोश्चासनादि यथाविध्यर्चितमित्यन्तं (कुर्यात्) ।

सर्वेषां भोजनपात्रप्रसारणादि सप्तावरणान्तं कृत्वा प्रेतपात्रात् घृतप्लुतान्नं घृतं चादाय भवद्‌नुज्ञया औपासनाग्नौ प्रेताहुतिं होष्यामीति संकल्प्य पुनरन्यदन्नं पूर्ववदादाय अग्नौकरणं करिष्य इति संकल्प्य औपासनाग्नेर्दक्षिणतः किंचिदंगारान्निरूह्य पूर्ववत् प्रेताहुतिं हुत्वा दर्शवत्साग्निक उपवीती पितृहस्तेग्नौकरणं कुर्यात् । औपासनाग्नौ प्रेताहुतिशेषं तत्पात्रे किञ्चिन्निधाय शिष्टं प्रेतपिण्डे नियोजयेत् । * अग्नौकरणशेषं प्रकृतिवत् पितृपात्रेषु किंचिकिंचिन्निधाय शेषं तत्पित्रादिपिण्डेषु नियोजयेत् । परिवेषणाद्यन्नत्यागं वरणक्रमेण कृत्वा उपस्थानाद्यच्छिद्रमस्त्वित्यंते पितुर्गोत्रस्येत्यादि द्वादशेहनि पित्रादिविष्ण्वंतं द्वितीयया निर्दिश्य उद्दिश्य स्वेन क्रियमाणेन सपिण्डीकरणाख्यश्राद्धेन पित्रादिविष्ण्वंतं षष्ठ्या निर्दिश्य एतेषामित्यादि अक्षयतृप्तिर्भूत्वा इत्युक्त्वा प्रेतं षष्ठ्या निर्दिश्य पित्रादीन् तृतीयया निर्दिश्य वसुरुद्रादित्यरूपैस्सह समानोदकसापिण्ड्यसिद्धिद्वारा वस्वादिपितृलोकावाप्तिरस्त्विति भवंतो ब्रुवंतु इति पूर्ववदुदकमुत्सृजन्, नमो देवेभ्य इत्यादि यथासुखं जुषध्वमित्यन्तं (वदेत्) । अत्र नान्नपितृसूक्तजपः । सपिंडीकरणादूर्ध्वं चेत् प्रत्याब्दिकपर्यन्तं मासिकोदकुम्भेषु अन्नसूक्तमेव । भोजनान्ते पात्रत्रयेणान्नमादायेत्याद्युत्तरापोशनपर्यन्तं प्रकृतिवत्कुर्यात् । एवंगुणेत्यादि पिण्डप्रदानं करिष्य इति संकल्प्य दक्षिणाग्रदर्भे प्रेतपिण्डं निधाय, तिलोदकं निनीय तत्पुरस्तात् दक्षिणापवर्गं अपां मेध्यमित्यादि पिण्डनिधानांतं दर्शवत्कृत्वा पिण्डसंयोजनं करिष्य इति संकल्प्य कृच्छ्रत्रयं कुर्यात् । प्रेतपिण्डं त्रेधा विभज्य मधुवाता इति शकलत्रयेषु मधूनि निनीय वामहस्ते तत्पिण्डं निधाय दक्षिणहस्तेनैकभागमादाय संगच्छध्वमिति मन्त्रद्वयमुक्त्वा पितः गोत्र शर्मन्प्रेत त्वत्पिण्डभागं त्वत्पित्रा गोत्रेण शर्मणा वसुरूपेण सह एष ते पिण्डभागस्संयुक्तः तस्मै ते स्वधा नमः इत्यपश्यन् सम्यक् संयोज्य निधाय ये समाना इति द्वाभ्यां संसृष्टपिण्डमाभिमंत्र्य विष्णुस्मरणं कुर्यात्, एवमितरयोः त्वत्पितामह त्वत्प्रपितामहेति मन्त्रसन्नामः । बर्हिषि लेपं निमृजेत् श्लोकः —

एष वोनुगतः प्रेतः पितृसामान्यमाप्तवान् ।
शिवं भवतु शेषाणां जायंतां स्थिरजीविनः ॥

---

* अस्मिन्विषये विप्रतिपत्तिर्वर्तते ।

तथाच यल्लाजीये — प्रेताहुतेश्शेषं भोजनपात्रे न दद्यात् ॥ तथा च देवलः —
प्रेताहुतेश्च यच्छेषं न दद्याद्व्रोक्तृभाजने । यदि दद्यात्स मूढात्मा विधितः पतितो भवेत् ॥

इत्युपस्थाय, इतः परं पितुः प्रेतशब्दो नास्ति; वसुरूपमेवोपस्थानादीनां पित्रादित्रयाणामेव । चतुर्थस्य तु पाथेयश्राद्धं सर्वधर्मरहितेनामद्रव्येण वृद्धप्रपितामहमुद्दिश्य कुर्यात् । ततो यथाविधि वैतरणीगोदानं कृत्वा यन्मे मातेत्यादि(स्ववाससो)दशां छित्वा तत्स्थाने वासोदकार्थं धृतवस्त्रं पित्रा परिहितं त्रिधा कृत्वा पिण्डेषु निदधाति । नमो वः पितर इत्यादि ब्राह्मणविसर्जनान्तं प्रकृतिवत् कृत्वा पिण्डानप्सु प्रक्षिप्य स्नात्वा धृतकम्बलो गृहमागत्य बन्धुभिस्सह रोदनं कुर्यात् । ततोऽभ्यज्य उष्णोदकेन स्नात्वात्मानं गन्धादिभिरलंकृत्य प्रकृतिवत् पूर्वतन्तून् विसृजेत् । नवयज्ञोपवीतानि धृत्वा ब्राह्मणैस्सह पुण्याहं वाचयित्वा फलदानताम्बूलदानानि कृत्वा बन्धुभिराश्वासितः ताम्बूलादीनि धृत्वा ब्राह्मणाशीर्वचनं लब्ध्वा बन्धुभिस्सह भुञ्ज्यात् । परेद्युश्शुभकार्याणि नवग्रहमखादीनि कृत्वा ब्राह्मणान् भोजयेत् ॥ ५३ ॥

इति त्रिपञ्चाशः खण्डः ॥

## अथ चतुष्पञ्चाशः खण्डः

### अथानुगमनम्

बालाजारिणीरजस्वलागर्भिणीसूतिकारोगिणीव्यतिरिक्तानां पतिव्रतानां अग्निप्रवेशं नियतम् । पत्युर्जीवसंशय एवानुयास्यामीति प्रतिश्रुत्य तेन साकं यथाधिकारं प्रायश्चित्तं कृत्वा तेनानुष्ठितोद्यापन-गौरीव्रतान्यतरव्रतादीनि नद्यां तटाके देवालये वा सद्यस्समापयेत् । अशक्तौ तदर्थं हिरण्यं ब्राह्मणेभ्यो दत्वा ततस्सुवासिनीभ्यश्च मङ्गळद्रव्यपरिपूर्णशूर्पोपायनानि दत्वा नारदोक्तमार्गेणाग्निं प्रविशेत् ॥

### श्लोकाः

स्नानमङ्गळसत्कारं भूषणाञ्जनधारणम् ।
गन्धं पुष्पं तथा धूपं हरिद्राधारणं तथा ॥

माङ्गल्यं च तथा सूत्रं पादालक्तकमेव च ।
कुर्यान्मङ्गळवाद्यानां श्रवणं गीतकस्य च ॥

प्रेतानुगमनेनैव गत्वा नद्यां शनैश्शनैः ।
हरिद्रालेपनं स्नानं हरिद्रावस्त्रधारणम् ॥

उत्क्रान्त्याख्यं(च) गोदानं तिलपात्रादि शक्तितः ।
भूरिदानं ततः कृत्वा चितौ संशायिते पतौ ॥

देशकालौ संकीर्त्य आत्मनो भर्तुश्च समस्तपापक्षयद्वारा सार्धत्रिकोटिसंवत्सरकालपर्यन्तं पत्या सह स्वर्गादिपुण्यलोकावाप्त्यर्थं सर्वश्रुतिस्मृतिपुराणेतिहासकल्पोक्तसम्पूर्णसकलफलावाप्त्यर्थं पत्या सह चितारोहणं करिष्य इति सङ्कल्प्य पतिं नमस्कुर्यात् । पतिं नारायणं ध्यात्वा इयं नारीति चित्यामन्वारोहिता पत्युत्तरतः पाददेशे दक्षिणाशिरसं संविशेत् वामपार्श्वे वा । सप्तच्छिद्रहिरण्यशकलप्रत्यासनप्रभृति समानम् ।

पित्रोः गोत्रयोः शर्मणोः प्रेतयोरित्यूहेन सङ्कल्पादिकं कुर्यात् । अग्निप्रदानप्रेतोपस्थानस्रवस्रुवाहुतयः द्विवचनेनोहेन कुर्यात् । नग्नप्रच्छादनं नवश्राद्धानि वृषोत्सर्जनं अस्थिसञ्चयनं श्मशानवेदिकापूजां पिण्डप्रदानमेकाहहोममुभयोः पृथक्पृथक् कुर्यात् । अस्थिसञ्चयनहोमं दशा(ह) हवनं तद्वेदिकापूजां च सकृदेव । शिलायां पृथक् तिलोदकं वासोदकं च दद्यात् । षोडशश्राद्धादिसपिण्डीकरणान्तं उभयोरेकपाकेनैकतन्त्रेण पृथग्वरणेन कुर्यात् । भर्तुस्सपिण्डीकरणं पूर्वं कृत्वा पश्चात्स्त्रियः पृथक्पाकेन कुर्यादित्येके ।

अनुमरणे सापत्यानपत्या वा भर्तृसापिण्ड्यं नियतम् । केचित् पुत्रवत्याः स्त्रियोर्घ्यं पिण्डं च भर्त्रा संयोज्य तद्विभज्य तद्भर्तृमात्रादिषु संयोजयेत् (इति वदन्ति) । पुत्रवत्या अनुमरणव्यतिरिक्तविषये श्वश्र्वादिसापिण्ड्यमेव । अपुत्रायास्सर्वथा भर्तृसापिण्ड्यमेव कुर्यात् । तस्य प्रयोगेऽष्टब्राह्मणान्वृत्वा पित्रोर्गोत्रयोः शर्मणोः प्रेतयोः एतस्मिन्नहनि पितुर्गोत्रस्य इत्यादि वस्वादिपितृलोकावाप्त्यर्थं इत्यन्ते मातुः गोत्रायाः यज्ञम्मदायाः प्रेतायाः तद्भर्त्रा गोत्रेण शर्मणा वसुरूपेण सह समानोदकसापिण्ड्यसिद्धिद्वारा वस्वादिपितृलोकावाप्त्यर्थं पित्रोर्गोत्रयोः एकोद्दिष्टविधानेन तत्पितृपितामहप्रपितामहानां पार्वणविधानेन इत्यादि संकल्पः ।

पुत्रवत्यास्तु भर्त्रा गोत्रेण शर्मणेत्यन्ते तद्भर्तृमातृपितामहीप्रपितामहीभिः गोत्राभिः रूपाभिः सह समानोदकेत्यादि प्रपितामहानां इत्यन्ते तद्भर्तृमात्रादीनां (नामानि) निर्दिश्य पार्वणविधानेनेत्यादि संकल्पः । एतस्मिन्पक्षे एकादश ब्राह्मणान्वृणुयात् । प्रेतद्वयार्थं द्वौ विप्रौ, तत्पित्रादीनां त्रीन् तद्भर्तृमात्रादीनां त्रीन् विप्रान्, विश्वेदेवार्थं द्वौ (विप्रौ) विष्ण्वर्थमेकं एवं निमन्त्र्य प्रकृतिवत्पूर्वोक्तप्रकारेणोहेन कुर्यात् । अर्घ्यसंयोजने स्त्रीपात्रोदकं तद्भर्तृपात्रेण पूर्वं संयोज्य तद्विभज्य तद्भर्तृपात्रोदकं तत्पित्रादिषु नियोज्य स्त्रीपात्रोदकं श्वश्र्वादिषु नियोजयेत् । एवं पिण्डं भर्तृपिण्डेन संयोज्य तद्विभज्य षडंशं परिकल्प्य भर्तृपिण्डभागत्रयं तत्पित्रादिषु पिण्डेषु त्रिषु संयोज्य स्त्रीपिण्डभागत्रयं श्वश्र्वादिषु त्रिषु पिण्डेषु संयोजयेत् । केवलभर्तृसापिण्ड्ये तु प्रेतद्वयार्थं द्वौ तत्पित्राद्यर्थान् त्रीन् विश्वेदेवार्थं द्वौ विष्ण्वर्थमेकमेवमष्टौ ब्राह्मणान्निमन्त्र्य पूर्वोक्तप्रकारेण कुर्यात् ।

अर्घ्यसंयोजने पितुर्गोत्रयोः इत्याद्येतस्मिन्नहनि मातुर्गोत्रायाः .... दायाः प्रेतायाः तद्भर्त्री गोत्रेण शर्मणा समानोदकसिध्यर्थं मातुर्गोत्रायाः प्रेतायाः पात्रस्थोदकं तद्भर्तुः गोत्रस्य शर्मणः प्रेतस्य पात्रस्थोदकेन संयोजयिष्य इति संकल्प्य स्त्रीपात्रस्थोदकं पूर्ववद्भर्तृपात्रे निनीय प्रकृतिवत्संकल्प्य संसृष्टतद्भर्तृपात्रोदकं तत्पित्रादिषु त्रिषु पात्रेषु संयोजयेत् । एवं पिण्डसंयोगो वैतरणीगोदानं पाथेय-श्राद्धं च पूर्ववत् पृथक्कुर्यात् । भर्तृसापिण्ड्ये पाथेयं केचिन्नेच्छंति । मृतामुद्दिश्य कुर्यादित्येके । मरणव्यतिरिक्तभर्तृसापिण्ड्ये तु देवार्थं त्रीन् प्रेतार्थं एकं भर्त्राद्यर्थं त्रीनेवं सप्त ब्राह्मणान्निमन्त्र्य स्त्रीपात्रोदकं तद्भर्तृपात्रे निनीय संसृष्टभर्तृपात्रोदकं सर्वं तद्भर्तृपात्र एव दद्यात् । तत्पित्रादिषु संयोजयेत् । एवं पिण्डं तद्भर्तृपिण्डेन संयोजयेत् ॥ ५४ ॥

इति चतुष्पञ्चाशः खण्डः ॥

## अथ पञ्चपञ्चाशः खण्डः ॥

## अथ ब्रह्ममेधप्रयोगः

अथ ब्रह्ममेधं ब्रह्मविदे कुर्यात् । ब्रह्ममेधमन्त्रान् पितृमेधमन्त्रेण सह संसृज्य एकस्मिन् कर्मणि पूर्वप्रकृत्या पितृमेधं कृत्वा विकृतिं मेधमुत्तरतः कुर्यात् । परेयुवांसमित्यंते चित्तिस्रुगित्यादि-पंचानुवाकैः पंच स्रुवाहुतीर्जुहोति । पूषा त्वेत इत्यादिषु त्रिष्वनुमन्त्रेषु भर्ता सन् म्रियमाण इत्यनु-वाकेन सहानुमन्त्रयेत् । पत्न्या संवेशनपक्षे इयं नारीत्यनेन सेनेन्द्रस्येत्यनुवाकेन सह पत्नीं संवेशयेत् । सुवर्णं हस्तादित्यंते देवस्य त्वेत्यनुवाकेन; देवस्य त्वा सवितुः प्रसव इत्याद्युत्तान-स्त्वांगीरसः प्रतिगृह्णात्वित्यंतेन; अग्नये हिरण्यं अस्य स्थाने सोमाय वास इत्यनुषङ्गेण । द्रव्यभेदवासरभयोस्तु विशेषः ।

राजा त्वा वरुणो नयतु देवि दक्षिणेमास्त्वाक्रन्तन्नपसस्त्वा तन्वत वरूत्रयस्त्वा वयं सोमाय वास इति वाससी । देवस्य त्वेत्यादि प्रतिगृह्णामीत्युक्त्वा वैश्वानरः प्रत्नथेति वाक्य-चतुष्टयान्ते राजा त्वा वरुणो नयतु देवि दक्षिणे वैश्वानराय रथमिति विशेषः । एवं सप्तदशमन्त्रैः प्रत्येकं प्रत्येकं हस्तसम्मार्जनं कुर्यात् । केचिद्गंधर्वेभ्यः स्रजमप्सरोभ्योऽलंकरणं, निरृत्यै त्वा अश्वतरं, निरृत्यै गर्दभमिति पृथगेव वदन्ति । हिरण्यशकलान् पूर्वं, तूर्ष्णीं प्रेतस्य पुनस्सुवर्णं घर्ममित्यादि चतुर्दशवाक्यैरास्ये, ब्रह्मेन्द्रमग्निं इत्यादिद्वादशवाक्यैर्दक्षिणनेत्रे, शतं नियुत इत्यादि-द्वादशवाक्यैर्वामनेत्रे, पुनश्शतं नियुत इति द्वादशवाक्यैर्दक्षिणकर्णे, सुवर्णं कोशमित्यादिद्वादश-वाक्यैर्वामकर्णे, इन्द्रो राजा जगत इत्यष्टसप्ततिवाक्यैरनुवाकशेषेण दक्षिणनासाबिले, पुनरिन्द्रो राजेत्याद्यनुवाकशेषेणैव वामनासाबिले; आहिताग्निश्चेदग्निर्यजुर्भिरित्येकविंशतिवाक्यैः प्रतिवाक्यं

प्रतिपात्रं नियोजयेत् । अनुवाकसमाप्तौ पुनरग्निरित्यादिवाक्यैर्नियोजयेत् । मैनमग्न इति द्वाभ्यां ज्योतिष्मतीं त्वेत्यनुवाकेन सहाग्निप्रदानं कुर्यात् । सूर्यं ते चक्षुरित्यनेन सहस्रशीर्षाद्भ्यस्संभूत इति द्वाभ्यां अनुवाकाभ्यां प्रेतमुपस्थाय, अजो भाग इति द्वाभ्यां ब्राह्मण एकहोतेत्यनुवाकेन पलायमानमजमनुमन्त्रयते ।

अग्नये रयिमते स्वाहेत्यन्ते चित्तꣳसन्तानेनेत्यनुवाकेन तृतीयया विभक्त्या चित्तꣳसन्तानेन स्वाहेत्यादिशरीराहुतिमन्त्रैः स्वाहाकारान्तैरत्र स्रुवाहुतीर्जुहुयात् । य एतस्यादिनवस्रुवाहुत्यन्ते प्रयासाय स्वाहेत्यनुवाकेन प्रतिस्वाहाकारं द्वादश स्रुवाहुतीर्हुत्वा (प्रकेतुनेत्यादिनवर्चेनपराचानुसꣳसति) प्रकेतुनेत्यादिनवर्चानुमन्त्रशम्सनान्ते हरिꣳहरन्तमित्यनुवाकेन षडृचेन सहानुशंसति । अश्मन्वती रेवतीरित्यन्ते आप्यायस्वमदिन्तमेत्यनुवाकेन संगाहते । उद्वयन्तमसस्परीत्यनया तरणिर्विश्वदर्शत इत्यनुवाकेन सह आदित्यमुपस्थाय धाता पुनात्वित्यनया ईयुष्टेये इत्यनुवाकेन सह स्नायात् । एतत्स्नानानन्तरं समानं पैतृमेधिकमविशेषेण कुर्यात् । एष ब्रह्ममेधः श्रोत्रियेभ्यो वेदविद्भ्यः प्रयुञ्ज्यात् ॥

## अथातुरसन्यासविधिः

अथातुरसन्यासविधिं व्याख्यास्यामो ब्रह्मचारी गृही वानप्रस्थाऽश्रमानुसारेण जलाशयं गत्वा शुचौ देशे श्रुतिविहितशौचाचमनपूर्वकं स्नात्वाऽऽचम्य शक्तश्चेत्क्षौरादिकं कृत्वाऽशक्तश्चेत् संभावितनियमेन मन्त्रस्नानादिकं स्वाधिकारप्रायश्चित्तं कृत्वा अग्न्यारोपणं कुर्यात् । ब्राह्मणैरनुज्ञातः प्राणानायम्य देशकालौ संकीर्त्य ज्ञानाज्ञानकृतसमस्तपापक्षयद्वारा ब्रह्मलोकावाप्त्यर्थं सकलवेदान्तप्रतिपादिताङ्गीरसोक्तप्रकारेणातुरसन्यासं करिष्य इति संकल्प्य, मृत्पात्रद्वयेनोदकं निधायैकपात्रोदकं दक्षिणपाणिना किञ्चिदादायैव वा अग्नेस्सूर्यः प्राणः प्राणाङ्ग स्वां योनिं गच्छ स्वाहा इत्यप्सु जुहुयात् । अन्यस्किंचिदादाय आपो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमि स्वाहा इति द्वितीयाहुतिं हुत्वा पात्रद्वयशेषमेव स्वीकृत्य आशुश्शिशान इत्यनुवाकेनाभिमन्त्र्य पुत्रैषणावित्तैषणादारैषणालोकैषणा मया त्यक्ता स्वाहा इति प्रथमं किञ्चित् पिबेत् । अभयं सर्वभूतेभ्यो मत्तः स्वाहेति द्वितीयं पिबेत् । ओं भूर्भुवस्सुवः सन्यस्तं मया स्वाहेति निश्शेषं तृतीयं पिबेत् । ततोन्यपात्रोदकं अञ्जलिपूर्णमादाय ब्रह्मणे नम इति प्राच्यादिचतुर्दिक्षु ऊर्ध्वायां च यथाक्रमं ब्रह्माञ्जलिं दद्यात् ।

गायत्रीविलापनं करिष्य इति संकल्प्य सूर्याभिमुखो भूत्वा प्रणवपूर्वकं प्रथमव्याहृतिं गायत्र्याः प्रथमपादं च उक्त्वा गायत्रीं प्रथमव्याहृतौ प्रवेशयामीति, द्वितीयां द्वितीयपादं, सावित्रीं द्वितीयव्याहृतौ, तृतीयां सरस्वतीं तृतीयव्याहृतौ, सर्वव्याहृतीस्समस्तां गायत्रीं व्याहृतीषु प्रवेशयामीति गायत्रीविलापनं कृत्वा प्रैषोच्चारणं कुर्यात् । विहृतसमस्तव्याहृतिपूर्वकं सन्यस्तं मयेति

मन्द्रमध्यमतारस्वरभेदैः त्रिवारमुच्चरन् पुत्रैषणायाः वित्तैषणायाः लोकैषणायाश्च व्युत्थितोऽहमिति च उक्त्वा विहृतसमस्तव्याहृतीः प्रणवे प्रविलाप्य तूष्णीं शिखां मुक्त्वाद्य भूस्वाहेति यज्ञोपवीतं चाप्सु प्रक्षिप्य वस्त्रादिकं त्यक्त्वा किञ्चिद्दूरमुदङ्मुखो गत्वा पुत्रादिभिः प्रार्थितो वस्त्रं परिधाय प्रणवेन युवा सुवासा इति वा सखा मे गोपायेति दण्डं गृहीत्वा प्रणवविलापनं कृत्वा यथायोग्याधिकारतया तदहमस्मीति निदिध्यासितव्यम्। अहं ब्रह्मास्मीत्यादिमहावाक्यमुक्त्वा यावज्जीवं प्रणवेनानुष्ठानं कुर्यात्। जीवति चेद्गृहान्निष्क्रम्य गुरुसमीपं गत्वा तेनोपदिश्यमानं सर्वं कुर्यात्। अत्यन्तापदि चेत् प्रैषोच्चारणमात्रं कुर्यात्, अमृतत्वं गच्छति ॥

## अथ यतिसंस्कारविधिः

अथ यतिसंस्कारविधिं व्याख्यास्यामः पुत्रश्शिष्यो वा पुत्रश्चेत्सर्वाङ्गवपनपूर्वकं स्नात्वा आचम्य धौतवस्त्रं धृत्वाचम्य ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा धृत्वा ब्राह्मणैरनुज्ञातः सर्वत्र यज्ञोपवीती प्राणानायम्य ब्रह्मीभूतभिक्षुं ओं नमो नारायणं गुरुं यतिसंस्कारविधिना संस्करिष्य इति संकल्प्य यतिं पीठे निधाय स्नापयित्वा सालग्रामतीर्थेन पञ्चगव्यैः पुण्यतोयैरभिषिञ्चेत्। आपोहिष्ठेति तिसृभिर्लिङ्गैः पवमानस्सुवर्जन इत्यनुवाकेन नारायणाभ्यां अतो देवा इति षड्भिः भूरुद्रसूक्तैः श्रीरुद्रेण च स्नापयित्वालंकृत्य, पुरुषसूक्तेन संपूज्य शिक्ये निधाय, नृत्तगीतादिभिर्ब्राह्मणैर्वेदघोषोपनिषद्वाक्यपारगैः सह ग्रामात्प्राचीमुदीचीं वा गत्वा, यतिं नदीतीरे शुचौ देशे निधाय दण्डप्रमाणमण्टपं खात्वा अपेतवीतेति शुद्धिं कृत्वा व्याहृतीभिः प्रोक्ष्य तस्मिन् प्रागग्रान्दर्भान् संस्तीर्योदगग्रान्वा सावित्र्या शरीरं प्रोक्ष्य पूर्ववत् (सं)स्थाप्यालंकृत्य संपूज्य विष्णो हव्यं रक्षस्वेति गर्ते शरीरं निदध्यात् ॥

दण्डं त्रिधा (वि)भज्य ब्रह्ममुद्राविहीनं इदं विष्णुरिति दक्षिणहस्ते निधाय तूष्णीं सव्ये कमण्डलुं निधाय हꣳसश्शुचिषदिति हृदयं स्पृष्ट्वा जपेत्। ब्रह्मजज्ञानमिति शिरः, पुरुषसूक्तेन भ्रुवोर्मध्यं, नमस्ते रुद्र मन्यव इत्यनुवाकेन मूर्धानं स्पृष्ट्वा जपेत्। व्याहृतीभिः लवणैस्सिकताभिः आगळाच्छ्वभ्र(मा)पूर्य भूमिर्भूमिमगादिति मूर्धानं नाळिकेरैर्भिन्द्यात्। अश्मनाग्निनाग्निरिति चतुर्णां चित्तिस्स्रुगिति पञ्चानुवाकैरुपस्थाय अतो देवा इति षड्भिः प्रणमेत्। अथवा प्रणवेनैव सर्वं कुर्यात्। गळादुपरि सम्यगवटं सिकताद्यैः पूरयित्वा गर्तस्योपरि मेखलात्रययुक्तं शिवलिङ्गाकारं कुर्यात् ॥

तण्डुलचूर्णादिभिरलंकृत्य ओं नमो नारायणं गुरुमुद्दिश्य प्रथमेऽहनि षोडशोपचारपूजां करिष्य इति संकल्प्य पुरुषसूक्तेनाष्टाक्षरेणावाहनादिषोडशोपचारैरभ्यर्च्य, आत्मानमन्तरात्मानं परमात्मानं जीवात्मानं तर्पयाम्यन्तैः क्षीरेण तर्पणं कृत्वा एवं वेदिकायामष्टदिक्षु प्रणवेन सावित्र्या

वा ब्रह्माञ्जलिना कुर्यात्। इन्द्रादिलोकपालेभ्यः अष्टाक्षरेण प्रणवेनाक्षतैश्च बलीन्दत्त्वा प्रणमेत्; एवमेवादशाहम्। एकादशेहनि पार्वणश्राद्धं कृत्वा द्वादशेहनि नारायणबलिकर्म कृत्वा त्रयोदशदिने आराधनं कुर्यात्। सोश्वमेधफलं लभेत्। नाशौचं नोदकक्रिया नानुगमनप्रायश्चित्तं स्नानं त्ववभृथं बुध्वा कुर्यात्। वाहकानां नं प्रायश्चित्तम्। नारिकेळादिभक्षणतः सर्वपापात्पूतो भवति। दुर्मरणेपि यतीनां न प्रायश्चित्तम्। खननादौ परैः कृते दशाहात्पूर्वं पुत्र आगते सर्वाङ्गवपनं कृत्वा स्नातो ब्राह्मणैरनुज्ञातः अतीतपूजादिकं कृत्वा तदादि पुत्र एव कुर्यात्। अनुज्ञातैः कृतेपि एवमेव। ऊर्ध्वं चेद्वपनादिकं कृत्वा ब्राह्मणैरनुज्ञातोऽश्वत्थमूले पूजां क्षीरतर्पणं बलिं च कुर्यात्। एवं प्रतिदिनं दशाहान्तं कृत्वा एकादशेहनि पार्वणश्राद्धं द्वादशदिने नारायणबलिं त्रयोदशदिने आराधनं कुर्यात्। पूर्वं ज्येष्ठे(न) कृते पश्चादागतैः कनिष्ठैरप्येवमेव कर्तव्यम्। पार्वणश्राद्धात्पूर्वं दर्शे आगते नापकर्षणं न दर्शश्राद्धम्। पार्वणदिने दर्शश्राद्ध आगते पार्वणश्राद्धाङ्गतिलतर्पणं श्राद्धानन्तरमेव कुर्यात्; दर्शश्राद्धं च कुर्यात्। सिद्धिं गते पितरि सूतिकान्तरे प्राप्ते पूजाकर्मादिकं स्वयमेव कुर्यात्। दशाहान्तं आशौचं नाचरेत्। ऊर्ध्वं चेदाशौचान्ते पार्वणश्राद्धं कुर्यात्॥ ५५॥

इति पञ्चपञ्चाशः खण्डः॥

## अथ षट्पञ्चाशः खण्डः

## अथ पार्वणश्राद्धम्

अथैकादशाहे पुत्रश्चेद्ब्राह्मणान्निमन्त्र्य तैलमुद्वर्तनादि दत्त्वा प्रातरेव पुण्याहं वाचयेत्। स्नातानाहूय औपासनाग्निमुपसमाधाय वसुरुद्रादित्यरूपपित्रादित्रिपुरुषोद्देशेन दर्शवत्पार्वणं नाम श्राद्धं कुर्यात्। पुरूरवार्द्रवौ विश्वेदेवौ (पार्वणश्राद्धे), सकृन्महालये तीर्थे ग्रहणे च धुरिविलोचनौ, आधाने दक्षक्रतू, नान्दीश्राद्धे सत्यवसुसंज्ञिकाः विश्वेदेवाः।

श्वोभूते खननादिद्वादशेहनि त्रयोदश ब्राह्मणान्निमन्त्र्य, अभ्यञ्जनादि दत्त्वा स्नात्वा (स्नातान्) विप्रानाहूय उपवेश्य ब्राह्मणैरनुज्ञातः प्राणानायम्य सर्वत्रोपवीती ब्रह्मीभूतभिक्षुं ओं नमो नारायणं गुरुमुद्दिश्य द्वादशेहनि नारायणबलिकर्म करिष्य इति संकल्प्य लौकिकाग्निं प्रतिष्ठाप्य अग्नीन्धनादिपूर्णपात्रनिधानान्ते अग्नेः पुरस्ताद्गन्धमाल्यसहितं कलशं तण्डुलोपरि निक्षिप्य तदुपरि प्रतिमां निधाय श्रीभूमिसहितं विष्णुं पुरुषसूक्तेन सर्वोपचारान्कृत्वा ब्रह्मवरणाद्यभिमुखान्ते व्याहृतीभिर्व्यस्तसमस्ताभिः द्विरावृत्त्याष्टाहुतीः केशवादिनामभिः पुरुषसूक्तेन प्रत्यृचं अष्टाक्षरेण द्वादशाक्षरेण च अतो देवा इत्यादिषड्भिरेतैः परमान्नेनावदानधर्मेण जुहुयात्। पुनः व्याहृतीभिर्विना

केशवादीनाज्येन जुहुयात्। स्विष्टकृतमवदायान्तः परिधि सादयित्वा हुतशेषं पायसं विष्णवे निवेद्य नमस्सदस इति नमो महद्भ्य इति वा मन्त्रेण नमस्कृत्य केशवादिविश्वम्भरविष्ण्वन्तान् क्षणं दद्यात्॥

कृष्णपक्षे सिद्धिं गते सङ्कर्षणादीन्वृणुयात्। सर्वेषां पादप्रक्षाळनं कृत्वा आचान्तान् प्राङ्मुखान् क्रमेणोपवेश्य केशवस्य इदमासनं इत्याद्यासनं दत्वा केशवार्थे क्षणः क्रियतां इत्यादि त्रयोदश विप्रान् वस्त्रयज्ञोपवीतगन्धाक्षतपुष्पधूपादिभिः क्रमेणाभ्यर्च्य स्थलशुद्धिं कृत्वा भोजनपात्राणि प्रसार्य अन्नादिकं परिवेषयेत्। अथ गायत्र्या प्रोक्ष्य पृथिवी ते पात्रमित्यादि + स्वाहा विष्णो हव्यं रक्षस्व केशव इदं ते अन्नं सपरिकरं केशवो देवता इदमन्नमित्यादि...केशवाय संप्रददे न ममेत्युदकपूर्वं दद्यात्; एवमितरेषाम्। प्रत्येकं प्रत्येकं परिषेचनाद्यापोशनं प्रदाय एको विष्णुरिति जपित्वा नारायणः प्रीयतामिति साक्षतोदकपूर्वं समर्प्य यथासुखं जुषध्वमिति भोजनायातिसृजेत्। भोजनकाले पुरुषसूक्तादिवैष्णवमन्त्रान् श्रावयेत्॥

भोजनांते स्विष्टकृतं समित्सन्नहनं जयादिबर्हिस्समंजनं परिधिप्रहरणं संश्रावप्रायश्चित्तादि-ब्रह्मविसर्जनान्तं कृत्वा त्रयोदशब्राह्मणानां पुरतः प्रागग्रेषु दर्भेषु ब्रह्माञ्जलिपूर्वकं भूः स्वधा भुवः स्वधा सुवः स्वधा भूर्भुवस्सुवस्स्वधेति बलीन् दद्यात्। उत्तरापोशनानि दत्वा अग्निसमीपे केशवादि-बलिप्रदानानि करिष्य इति संकल्प्य ब्राह्मणैरनुज्ञातः प्रागग्रेषु दर्भेषु तूष्णीमक्षतोदकं दत्वा केशवाय बलिं ददामीत्यादिद्वादशबलीन् दत्वा उपर्यक्षतोदकं निषिच्य आचांतान् ब्राह्मणानुपवेश्य विष्णुं पुरुषसूक्तेन स्तुत्वा उद्वास्य प्रतिमामाचार्याय दत्वा यथाशक्ति गोदानदशदानानि कृत्वा ब्राह्मणेभ्यो दक्षिणातांबूलादि दत्वा प्रणिपत्य तान्विसृजेत्; एष यतिनारायणबलिः॥

## अथाराधनम्

परेद्युस्त्रयोदशदिने षोडशसंख्याकान् ब्राह्मणाग्निमंत्र्य स्नातानुपवेश्य ब्राह्मणैरनुज्ञातः ओं नमो नारायणं गुरुमुद्दिश्य त्रयोदशेहनि गुरुपरमगुरुपरमेष्ठिगुरुपरात्परगुरूणां केशवादीनां च गुरोराराधनं करिष्य इति संकल्प्य मण्डलोपरि (वृतानां ब्राह्मणानां) पादान्प्रक्षाल्य पादतीर्थं गृहीत्वा संपूज्य ब्राह्मणानुपवेश्य आसनादिदीपान्तं नारायणबलिवदभ्यर्च्य अन्नदानादि पूर्ववत्कुर्यात्; बलिकर्मवर्जम्। भोजनान्ते दक्षिणादिभिस्तान् तोषयित्वा तैः कृतमाशीर्वचनं लब्ध्वा तीर्थं प्राश्य तान्विसृज्य बन्धुभिस्सह भुञ्ज्यात्। एवं प्रतिमासं मृताहे आराधनं कृत्वा संवत्सरे व्यतीते पार्वणविधानेन आब्दिकं कृत्वा परेद्युर्वा आराधनं कुर्यात्। तत्प्रतिमासं मृतेऽहनि पार्वणश्राद्धं कृत्वा परेद्युराराधनं कर्तव्यमिति, चंडालादिभिर्मृतस्य वत्सरान्ते नारायणबलिं कृत्वा पैतृमेधिकं कुर्यादिति च केचिदाहुः॥

## तस्य प्रयोगः

पूर्वेद्यू रात्रौ आचार्यं वृत्वा षड्विप्रान्निमन्त्र्य पितुः गोत्रस्य शर्मणः प्रेतस्य चण्डालादिभिर्मरणेन यो दोषः समजनि तद्दोषपरिहारार्थं पैतृमेधिकसंस्कारार्थं नारायणबलिकर्म करिष्य इति संकल्प्य देवालये मठे वा पुण्याहं वाचयित्वाष्टदल्युक्तं स्थंडिलं कल्पयित्वा कुम्भत्रयं संस्थाप्य प्रतिमां निधाय विष्णुं वैवस्वतं यमं क्रमेण नाममन्त्रैस्संपूज्य विष्णुनामसहस्रेण स्तुत्वा पूर्वादिदलेषु केशवादीन्संपूजयेत्। प्राचीनावीती ब्रह्मणे इमं पिण्डं ददामीति शिवाय यमाय विष्णवे प्रेताय पञ्च पिण्डान् कुशेषु तिलोदकपूर्वकं दद्यात्। गृहमागत्य मध्याह्ने स्नात्वा विप्रानाहूय पूर्ववत् कुम्भस्थापनादिषोडशोपचारैः अभ्यर्च्य लौकिकाग्निं प्रतिष्ठाप्य अग्नीन्धनाद्यग्निमुखान्तेऽवदानधर्मेण चरुमवदाय विष्णोर्नुकं परो मात्रयेति द्वाभ्यां, नमो नारायणाय, पुरुषसूक्तेन, केशवादिनामभिरेतैर्मंत्रैः समिदाज्याभ्यां चर्वाहुतीः जुहुयात्। स्वाहांते स्तुत्वा ततः स्विष्टकृतं समित्सन्नहनं जयादिब्रह्मविसर्जनांतं कुर्यात्। आचांतान् देवतार्थब्राह्मणान् प्राङ्मुखानुपवेश्य प्रेतार्थब्राह्मणमुदङ्मुखमुपवेश्य प्रथमं विष्णवर्थं यमं वैवस्वतं ब्रह्माणं रुद्रं प्रेतार्थं—एवं षड्विप्रान्निमन्त्र्य दर्शतन्त्रेण कुर्यात्; अग्नौकरणं च। तृप्तिप्रश्नांते पिण्डदानं करिष्य इति सङ्कल्प्य प्रथमं विष्णवे ब्रह्मणे शिवाय यमाय वैवस्वताय प्रेताय षष्ठं प्रेतस्य नामगोत्रेण मध्वाज्यतिलमिश्रितान्नेन षट्पिण्डान् कुशेषु तिलोदकपुरस्सरं दत्वा ब्राह्मणेभ्यो दक्षिणादि दत्वा तान्विसृज्य प्रतिमादिकमाचार्याय दद्यात्। प्रायश्चित्तं कृत्वा पितृमेधं कुर्यादपि वा नारायणबलिं कृत्वा पितृमेधं कुर्यात्॥

## अथ उत्तरप्रायश्चित्तम्

अथानुक्तेषु प्रायश्चित्तेषु कानिचिद्वक्ष्यामः। कनिष्ठाद्यैरौर्ध्वदैहिके कृते दशाहात्पूर्वं ज्येष्ठ आगते वपनं कारयित्वा स्नात्वा ब्राह्मणानुज्ञां लब्ध्वा जले दक्षिणाभिमुखस्तिष्ठन् सङ्कल्पादिपितृमेधमंत्रान् पठित्वातीततिलोदकानि कृत्वा तद्दायनुजैस्सह ज्येष्ठ एव कुर्यात्। ऊर्ध्वं चेत् पाषाणं निधाय तत्रापि दशाहं प्रतिदिनं तिलोदकं शिलायां दद्यात्, पिण्डदानं च कुर्यादित्येके। एकादशेऽहनि कनिष्ठैस्सह षोडशश्राद्धानि कृत्वा सपिण्डीकरणं कुर्यात्। सपिण्डीकरणादूर्ध्वं चेत् पूर्वोक्तप्रकारेण दशाहान्तं कृत्वा पूर्ववत्सपिण्डीकरणं कुर्यात्। दशाहादूर्ध्वं एकाहात्पूर्वं आगते वपनादिदशाहांतं तिलोदकं तत्क्षणमेव समाप्य आद्यश्राद्धं कृत्वा तदादिदशाहान्तं आशौचं चरित्वाशौचांते ऊनादिसपिण्डीकरणांतं अनुजैस्सह कुर्यात्। ज्येष्ठेन कृते कनिष्ठ आगते पूर्वोक्तप्रकारेण दशाहान्तं तिलोदकं दत्वा एकादशेऽहनि पुनस्सपिण्डीकरणं कुर्यात्। त्रिपुरुषोद्देशेन प्रत्याब्दिकवत्कुर्यात्। अन्यैः कृते दशाहात्पूर्वं पुत्र आगते पूर्ववत्सङ्कल्पादिपितृमेधान् (मन्त्रान्) पठित्वा मृदास्नानादि सर्वं कुर्यात्। ऊर्ध्वं चेद्दहन-

सञ्चयनं विना सर्वं कुर्यात् । पलाशविधिना दहनमपि कुर्यादित्येके । प्रक्रान्ते प्रेतकर्मणि ज्येष्ठो यदि रोगी स्यात् तदनुज्ञया कनिष्ठस्समापयेत् । ज्येष्ठो विधुरश्चेत्कनिष्ठस्त्वग्निमांश्चेदग्नौकरणं कनिष्ठ एव कुर्यात् । दशाहात्पूर्वं अकृतेषु तिलोदकपिण्डदानसञ्चयननवश्राद्धेषु अग्न्यावाद्यतिपत्तौ शाखांतरेण वा कृते अस्थ्यस्ति चेदस्थिदहनं तदभावे त्रिरात्राशौचपक्षमाश्रित्य पालाशविधिना दाहादि कुर्यात् । गृहेऽग्नौ विद्यमाने विदेशे पितरि मृते तं प्रेतं तैलद्रोण्यामवदाय शकटेनाहृत्य तेनाग्निना दहेत् । अपिवा निर्मथ्येन लौकिकेन वा दहेत् । तस्यास्थीन्यहतेन वाससा संवेष्ट्य दीर्घवंशे प्रबध्य अनधोनिदानाप्रयता मृण्मयभाजना आहरंति । तानि ग्राममर्यादायां प्रतिष्ठाप्याग्निसमीपमानीय पूर्वोक्तप्रकारेणास्थिसंस्कारं कुर्यात् । अग्निसन्निधौ मातरि मृतायां तेनाग्निना दहेत् । पित्रा विच्छिन्नोपासनाग्निश्चेत् गृहे मातरि मृतायां प्रेताधानं कृत्वा विधिवद्दहेत् ॥

## अथ पलाशविधिः

अग्नौ विद्यमाने शरीराभावे षष्ट्युत्तरत्रीणि शतानि पलाशवृन्तान्यादाय तैः कृष्णाजिने पुरुषाकृतिं कृत्वा पलाशवल्कैः कुशैर्वा संधिषु संवेष्ट्य चत्वारिंशता शिरः प्रकल्पयेत, दशभिः ग्रीवां, विंशत्योरस्त्रिंशत्योदरं पञ्चाशता पञ्चशतैकैकं बाहुं ताभ्यामेव पञ्चभिः पञ्चभिरङ्गुलीरुपकल्पयते। सप्तत्या संप्रत्यैकैकं पञ्चभिः पञ्चभिरङ्गुलीरुपकल्पयतेष्टाभिः शिश्नं, द्वादशभिर्वृषणं, तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तां स्नापयित्वाऽऽच्छाद्यालंकृत्याऽपरेणाग्निं दक्षिणाग्रीवमधरलोमास्तीर्य मन्त्रौ दशेनाहतेन वाससा प्रच्छाद्य बान्धवाः सर्वतः पर्युपविशन्त्ययममुकशर्मासि यस्य ते अयमग्निरिति निर्दिश्य पुत्रादयः प्रकीर्येत्यादि सपिण्डीकरणान्तं कुर्यात् ॥

अस्थ्यस्ति चेत् प्रेताधानं कुर्यात् । अस्थ्यग्न्योरभावे पलाशविधिना शरीरं सम्पाद्य प्रेताकारं कृत्वा दहेत् । पुनरस्थ्नां लाभे पुनस्संस्कारं कुर्यात् । विधुरादीनां तेनाग्निना दहेत् । पलाशविधौ सद्यः सञ्चयनम् । त्रिरात्राशौचपक्षे प्रथमेहनि तृतीयेह्न्यपि एकविंशतितिलोदकं त्रींस्त्रीन् पिण्डान्दद्यात् । द्वितीयेह्नि त्रयस्त्रिंशत्तिलोदकं चतुरः पिण्डान् । नवश्राद्धं तु प्रथमदिने त्रीणि तृतीयदिने श्राद्धद्वयमपि वा । प्रथमेह्नि श्राद्धद्वयं एवं द्वितीयेह्नि तृतीयेह्न्येकं, तत्र दशाहकृत्यमपि वा । प्रथमदिने द्वादशतिलोदकं द्वितीये त्रिंशत् तृतीये त्रयस्त्रिंशत् कुर्यात् शेषं समानम् । चतुर्थेह्नि नवश्राद्धवृषोत्सर्जनाद्याद्यादिषोडशश्राद्धानि कृत्वा पञ्चमदिने सपिण्डीकरणं कुर्यात् ॥

एवं बहिर्दशाहे ज्येष्ठभ्रात्रादिसर्वेषां कारुण्यानां पित्रोः भर्तुश्च संवत्सरेऽतीते प्रकृतिदाहेपि अकृतौर्ध्वदेहिकस्य दशरात्रं प्रकृतिवत्कुर्यात् । व्याघ्रादिभिर्हते वत्सरांते पञ्चकृच्छ्रं नवममासादूर्ध्वं अर्धकृच्छ्रं षाण्मासादूर्ध्वं पञ्चचत्वारिंशत्कृच्छ्राणि, त्रिपक्षादूर्ध्वं त्र्यब्दकृच्छ्रं,

सद्यः पञ्चसप्ततिकृच्छ्राणि, येन केन प्रकारेण चरित्वा शरीराग्न्योरभावेपि पूर्ववत्संपाद्य पैतृमेधिकं कुर्यात् ॥

इति दुर्मरणप्रायश्चित्तम् ॥

## अथ दुर्मरणप्रयोगः

यदि वा विप्रो विषदष्टो म्रियेत नमो अस्तु सर्पेभ्य इति तिस्रः चतुर्गृहीताज्याहुतीर्जुहुयात् । अशनिहतो म्रियेत मूर्धानं दिवो अरतिमिति, दंष्ट्राभ्यो म्रियेत दंष्ट्राभ्यां मलिम्लूनिति द्वाभ्यां, अप्सु म्रियेतेमं मे वरुण तत्वायामीति द्वे, श्रृङ्गिभ्यो म्रियेत आगावो अग्मन्निति द्वे, चतुर्गृहीताज्याहुतीर्जुहुयात् । कृच्छ्राभाव एवमेव प्रायश्चित्तं कृत्वा दहेत् । समुच्चयमेके । वत्सरान्ते सपिण्डीकरणपक्षे ऊनादिपञ्चदशश्राद्धानि स्वे स्वे काले एकोद्दिष्टविधानेन (कुर्यात्) त्रिपक्षादिषु कालेषु सपिण्डीकरणं (यदि) क्रियते तदादौ भाविमासिकान्युत्सृजेयुः । ऊर्ध्वमासिकान्यपकृष्य पूर्ववत्कृत्वा सपिण्डीकरणं कुर्यात् । ऊर्ध्वं भाविमासिकानि पुनः स्वे स्वे काले पार्वणवत्कुर्यात् । आदौ भाविमासिकानां पुनरावृत्तिः वत्सरांतिमदिने । संवत्सरविमोकाख्यश्राद्धं कृत्वा आब्दिकं मृताहे कुर्यात् । अनुमासिकानि न कुर्यात् । मासाज्ञाने आषाढमाघमासयोः कुर्यात् । तिथ्यज्ञाने कृष्णैकादश्यां अमावास्यायां वा कार्यम् । सपिण्डीकरणात्पूर्वं मृतसूतेणानुमासिकादीनि न कुर्यात् ॥

## अथ वमनप्रायश्चित्तम्

आद्यादिषोडशश्राद्धेषु वमने लौकिकाग्निं प्रतिष्ठाप्य सर्वमन्नं समादाय यत्ते कृष्ण इति मन्त्रेण द्वात्रिंशदाहुतीर्हुत्वा शेषं समापयेत् । गुदस्रावे पुनः श्राद्धमेव । सपिण्डीकरणे पिण्डदानात्पूर्वं प्रेतवमने सपिण्डीकरणं पुनः पाकान्तरेण कुर्यात् । प्रत्याब्दिकानुमासिकगयाश्राद्धमहालयेषु पिण्डदानात्पूर्वं पितृवमने चेत् अग्नौकरणलोपेऽग्नौकरणहोमे कृतेऽग्निनाशे वा पितृपिण्डे भिन्ने पितृभोजनपात्र (स्य) स्थानाच्चलने दीपनाशे श्राद्धशेषं समाप्य तस्मिन्दिने तस्मिन्नुपोष्य परेह्नि पुनः श्राद्धं कुर्यात् । प्रत्याब्दिकादिश्राद्धेषु देवानां पितामहानां वमने, दर्शादिश्राद्धेषु पित्रादीनां वमने लौकिकाग्निं प्रतिष्ठाप्य हुतशिष्टमन्नमादाय आदौ प्रणवेन मध्ये प्राणादिपञ्चभिर्मन्त्रैःषड्बारमन्ते भूर्भुवस्सुवरोमिति स्वाहाकारान्ते द्वात्रिंशदाहुतीर्हुत्वा पिण्डदानं कुर्यात; न पुनः श्राद्धम । पितामहादीनां पिण्ड(स्य) मार्जारादिभिः स्पर्शे भिन्ने वा पुनः पाकेन पूर्वपाकेन वा पुनः पिण्डदानं कुर्यात् । पार्वणेऽर्घ्यविस्मरणे मध्यब्राह्मणविसर्जनात् पूर्वं वा ज्ञाते आचान्तेषूपविष्टेषु लौकिकाग्निं प्रतिष्ठाप्य स्रुवसम्मार्जनान्तेऽग्निं परिषिच्य समुद्राय वयुनायेति मन्त्रावृत्या चतस्र आज्याहुतीर्व्याहृतीर्हुत्वा विप्रसन्निधावर्घ्यपात्राणि पुनरास्तीर्यार्घ्यप्रदानान्तं कृत्वा शेषकर्म समापयेत् ॥

अग्नौकरणलोपे —

भोजनमध्ये ज्ञाते सप्तव्याहृतिमन्त्रैराज्याहुतीर्हुत्वा आज्येनाग्नौकरणं कुर्यात्। तद्धुतशिष्टं भोजनपात्रे पिण्डे च नियोजयेत्। भोजनसमापने — पुनःश्राद्धं कुर्यात्॥

उच्छिष्टसंस्पर्शे —

प्रक्षाळ्यान्येन वारिणा भोजनान्ते स्नात्वा गायत्रीं त्रिशतं जपेत्। अन्योन्यस्पर्शेऽप्येवमेव प्रायश्चित्तम्। अन्योन्यमुच्छिष्टसंस्पर्शे स्पृष्टपात्रमपास्य भूशुद्धिं कृत्वा पुनः पात्रान्तरं प्रसार्य सर्वमन्नं पूर्ववदिक्षिप्त्वा परिषिच्य तद्विप्रं भोजयेत्; पुनः श्राद्धं कुर्यादित्येके॥

शवानुगमने —

त्रयोदशनिमज्जनेन सचेलं स्नात्वा घृतं प्राश्य अग्निं स्पृष्ट्वा पुनः स्नायात्। अग्न्यभावे ज्योतींषि वा दृष्ट्वा पुनः स्नायाद्घृताभावे हस्तेन जलमादाय दशवारं गायत्र्याभिमन्त्र्य पिबेदित्याहिताग्नेश्शवानुगमनप्रायश्चित्तम्॥

इति सप्तपञ्चाशः खण्डः॥

## अथाष्टपञ्चाशः खण्डः

## अथ दुर्मरणादिप्रायश्चित्तम्

शवे क्लिन्ने पूतिगन्धे वा गोमयोदकेन (सं)स्नाप्य तप्तकृच्छ्रं कृत्वा पावमानादिभिः पुण्याहाद्भिरभिषिच्य दहेत्। शवे कृमिरुत्पद्यते (यदि) गोमूत्रगोमयभस्ममृद्भिर्मिश्रितोदकैः स्नापयित्वा पूर्ववत् तप्तकृच्छ्रादिकं कृत्वा दहेत्। चण्डालादिभिः स्पृष्टे स्पृष्टो वा म्रियते चान्द्रायणं कृत्वा पावमानादिभिरभिषिच्य दहेत्। शूद्रैः स्पृष्टे पञ्चगव्येन पावमानादिभिः पुण्याहाद्भिरभिषिच्य दहेत्। शूद्रैश्शवे दग्धे तप्तकृच्छ्रत्रयं कृत्वास्थीनि पञ्चगव्येन संस्नाप्य विधिवदस्थिसंस्कारं पुनः कुर्यात्। रजस्वलाश्वानमर्कटकुक्कुटादिभिः स्पर्शे चान्द्रायणद्वयं कृत्वा पावमानादिभिः पुनर्मार्जयेत्। महाजले निमग्नानां शरीरादर्शने पलाशविधिना दहेत्। तस्मिन् शरीरे पुनर्दृष्टे काष्ठवल्लौकिकाग्निना दग्ध्वा तद्भस्मादिकं जले निक्षिपेत्। गृहकर्मावसाने शवे पुनर्जीविते आयुष्मदिष्टिं कुर्यात्। पथि कर्मावसाने तु घृतकुंभे निमज्जयित्वा जातकर्मादिविवाहान्तं कुर्यात्॥

देशांतरगतस्य मरणशंकया पैतृमेधिके कृते पुनरागमते तस्मिन् घृतकुंभे स्थापयित्वा शुभे लग्ने तमुत्थाप्य त्रिरात्रं द्वादशरात्रं वा जातकर्मप्रभृतिसमावर्तनपर्यन्तं कृत्वा पूर्वां भार्यामुद्वाहयेत्। पूर्वाभावेऽन्यां वोद्वाह्याग्नीनाधायैन्द्राग्नं पशुं स्थालीपाकं वा कृत्वा गिरिं गत्वा आयुष्मदिष्टिं कामायेष्टिं वा कुर्यादीप्सितैः क्रतुभिस्तया यजेत। प्रवाहादिनास्थिनाशे एकस्य द्वयोर्वा लाभे तेनास्थ्ना सर्वं कुर्यात्। सर्वाभावे दहनस्थानमृद्भिर्वा विधिवत्कुर्यात्। उद्बंधनस्य पाशभेदे दुर्मृतवहने तप्तकृच्छ्रं चरेत्। दक्षिणां गृहीत्वा शुद्रप्रेतमपि दहेत्। प्राजापत्यं कृच्छ्रं कुर्यात्। दक्षिणाभावे न प्रायश्चित्तम्॥

एककालमृतानां शवसन्देहे काष्ठवल्लौकिकाग्निना दग्ध्वा पश्चात् पलाशविधिवद्दहेत् । पर्युषिते शवे पञ्चगव्येन स्नापयित्वा प्राजापत्यं कृत्वा दहेत् । सूतिकायां मृतायां पूर्वं शुद्धोदकेन पञ्चगव्येन स्नापयित्वा कृच्छ्रत्रयं कृत्वाऽऽपोहिष्ठेति तिसृभिः हिरण्यवर्णा इति चतसृभिः दधिक्राविण्ण इति द्वाभ्यां पवमानः सुवर्जन इत्यनुवाकेन तरत्समन्दीधावतीति चतसृभिः एतोन्विन्द्रमिति तिसृभिः शुची वो हव्येति तिसृभिः पवित्रवन्त इत्येकया चरणं पवित्रमिति द्वाभ्यां गायत्र्याग्नेर्मन्व इत्यनुवाकेन एतैर्मंत्रैश्शतकुंभजलैरभिषिच्य पुनः पञ्चगव्येनाभिषिच्य वस्त्रान्तरं परिधाय पुण्याहोदकेन मार्जनं कृत्वा दहेत् ॥

## रजस्वलामरणे

पुण्याहोदकेन मार्जनं कृत्वा मलापकर्षणस्नानं कारयित्वा द्वात्रिंशद्वारं त्रयोदशवारं वा स्पृष्टास्पृष्टिस्नानं कारयित्वा तेभ्यो दक्षिणां दत्वा प्रतिस्नानं शुद्धवस्त्रैराच्छाद्य विधिवद्दहेत् ॥

## गर्भिणीमरणे

गर्भिण्यां मृतायां प्रकृतिवद्धस्तसम्मार्जनं कृत्वा प्रेतं परिश्रित्य हिरण्यगर्भस्समवर्तताग्र इति तस्याः नाभेर्वामपार्श्वोदरं चतुरंगुलमात्रं असिनाऽलिख्य गर्भदर्शनाद्गर्भे जीवयुते जीवत्वयं मम पुत्र इति जीवन्तमनुमन्त्र्यभूमौ हिरण्यमन्तर्धाय तत्र शिशुं निधायोदकेन बालं संस्नाप्य ग्रामं गत्वा यस्ते स्तन इति स्तनं प्रदाय सुरक्षितं कृत्वा पुनश्शवांतिकं प्राप्य (विधिवद्दहेत् । अत्र संस्कारात्पूर्वं) ग्रामप्रवेशने न दोषः ॥

गर्भे मृते तस्याः पाददेशेऽवटे निखनेत् । तस्मिन्नुदरबिले आज्याहुतीर्जुहोति; शतायुधायेति पञ्चभिः, प्राणाय स्वाहेति सप्तभिः, पूष्णे स्वाहेति सप्तभिः, प्रयासाय स्वाहेति द्वादशभिः एतैराज्याहुतीर्हुत्वा, जठरे पृषदाज्यं पूरयित्वा सूत्रग्रथितेनाव्रणं जठरे कृत्वाऽब्लिङ्गाभिः (ऋग्भिः) मृद्भस्मपञ्चगव्यमिश्रोदकैरभिषिच्यान्यवस्त्रेण परिधाय उदरच्छेद(दोष)निर्हरणार्थं कृच्छ्रत्रयं कृत्वा चितामारोप्य विधिना दहेत् ॥

इत्यष्टपञ्चाशः खण्डः ॥

## अथैकोनषष्टितमः खण्डः

## अथ श्राद्धनिर्णयः

आशौचे वर्तमाने पित्रोः प्रत्याब्दिके प्राप्ते तस्मिन्नहनि हिरण्यश्राद्धं कृत्वाऽऽशौचे व्यतीते अन्नेन पुनः श्राद्धं कुर्यात् । पितुराशौचमध्ये मातुः प्रत्याब्दिके एकादशेऽहनि पितुः षोडशश्राद्धान्तं कृत्वा मातुः प्रत्याब्दिकं कुर्यात् । पित्रोराशौचमध्ये कारुण्यप्रत्याब्दिके (संप्राप्ते) द्वादशाहे

सपिण्डीकरणं कृत्वा त्रयोदशादिने कारुण्यप्रत्याब्दिकं कुर्यात्। ग्रहणे प्रत्याब्दिके प्राप्ते भोजन-प्रतिषेधे हिरण्यश्राद्धं कृत्वा तस्मिन्नुपोष्य परेद्युरन्नश्राद्धं कुर्यात्। अस्तमयात्पूर्वं सूर्यग्रहणमोचने दिवैव श्राद्धमुपक्रम्य रात्रावपि समापयेत्। स्वयं भुञ्जीयाच्छेषमाजिघ्रेत् (वा)। ग्रहणे त्वाशौच-संपाते ग्रहणश्राद्धमाशौचेऽपि कुर्यात् ॥

सोदकुम्भमासिकनवश्राद्धतिलोदकपिण्डदानानुमासिकाद्यतिपत्तौ उत्तरेण सहाचरेत्, इत्यनुमासिके विशेषः। गणशः क्रियमाणानि मासिकानि बहून्यपि त्रीणि स्युरर्घ्यपात्राणि पिण्डांस्त्रीनेव निर्वपेत्; षट्पिण्डान्मासिकद्वित्वे। बहुत्वे त्रय एवार्घ्यपात्राण्येवमेव। सपिण्डीकरणादूर्ध्वं वृद्धिश्राद्ध उपस्थिते ऊनानि विहाय शिष्टमासिकान्यपकृष्य कृत्वा वृद्धिं समाप्य पुनः स्वे स्वे काले कुर्यात्। ऊनानां नापकर्ष उत्कर्षश्च। तथैव च कारुण्यविषये त्वपकर्षणमेव, न पुनः स्वकाले ॥

कर्तृभार्या रजस्वला चेदमूनि पञ्चदश श्राद्धानि विहायाद्याद्यवशिष्टानि श्राद्धानि कुर्यात्। मृताहानुमासिकं नित्यमहालयं च कुर्यात्। दर्शादिश्राद्धं चेद्धिरण्येनामेन वा कुर्यात्; न पुनः श्राद्धम्। आपदि प्रत्याब्दिकमप्येवमेव संकल्पविधानेन कुर्यात्। तत्रापि गृहपकान्नेनामेन वा होमं पिण्डदानं च कुर्यादिति केचिदिच्छन्ति। दुर्मृतानां भाद्रपदकृष्णचतुर्दश्यां पित्रादीनामपि पूर्वोक्तविधानेनैकोद्दिष्टमेव कुर्यात्। पितृपक्षे मृतानां गुर्वनुजादीनामपि पार्वणम् ॥

एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्तितम्।
त्रीनुद्दिश्य (च) यच्छ्राद्धं पार्वणं मुनयो विदुः ॥ ५९ ॥

इत्येकोनषष्टितमः खण्डः ॥

## अथ षष्टितमः खण्डः

### अथ मासिश्राद्धम्

अथ मासिश्राद्धं चतुर्दश्यामेकोद्दिष्टविधानेन, अन्यत्र पार्वणेन, दर्शवद्ब्राह्मणनिमन्त्रणादि षट्पुरुषोद्देशेन वा (कुर्यात्।) आच्छादनान्ते औपासनाग्निं प्रतिष्ठाप्याग्नीन्धनाद्यग्निमुखान्ते उद्ध्रियतामग्नौ च क्रियतां इत्यामन्त्रयते। काममुद्ध्रियतां काममग्नौ च क्रियतामिति प्रत्युक्ते, गृहपाकात्पात्रद्वयेनान्नमुद्धृत्यावदानधर्मेणावदाय यन्मे मातेत्यादि प्रतिमन्त्रं सप्तान्नहोमं जुहोति। अत्र पित्रादीनाममुकशर्मणे स्वाहेति जुहुयात्। स्वाहा पित्र इत्यादि षडाहुतीः स्रुचैव जुहुयात्। एवं मातामहादीनां पात्रान्तरेणान्नेन यन्मे मातुर्मात्रे प्रलुलोभेत्याद्यूहेनाज्यहोमान्तं पुनः कृत्वा स्विष्टकृत-मन्त्राभ्यामवदाय हुत्वोदीचीनं भस्मापोह्य हविष्यं स्वाहाकारेण जुहुयात्। न जयादयः बर्हिस्समञ्जनं परिधिप्रहरणादिब्रह्मविसर्जनान्तं कुर्यात्। आघारावग्निमुखाज्यभागौ प्रदक्षिणानुव्रजने च चित्ते

ऽऽधारयेत्स्विष्टकृदप्रसिद्धं यज्ञोपवीतं कपर्दिनोक्तम् । एष ते तत इत्यादि पितृहोमशेषान्नशेषमभिमृश्यैष ते मातुस्ततेति तदन्नमभिमृश्य भोजनपात्रहुतशिष्टनिधानादि पिण्डनिर्वापणं विना ब्राह्मणविसर्जनांतं कुर्यात् ॥

पिण्डदानं करिष्य इति सङ्कल्प्य द्वैधं दक्षिणाग्रान् दर्भानास्तीर्यैवं तत्पूर्वतो मातामहादी-नामपि तेषु पश्चिमदर्भेषु मार्जयंतां मम पितर इत्यादि त्रीन् तिलोदकांजलीन् दत्वा तत्पश्चिमतः मार्जयन्तां मम मातर इत्यादि द्वादशतिलोदकाञ्जलीन्दत्वा एतत्ते तत अमुकशर्मन् ये च त्वामनु इत्यादि यथालिङ्गं द्वादशपिण्डान्दद्यात् । पूर्ववत्तिलोदकं निनीय ये च वोत्रेत्यादि तृप्यन्तु भवन्त इत्यन्तं प्रति-वर्गं यथालिंगं पिण्डानुपस्थाय पुत्रान् पौत्रानित्युदपात्रेण त्रिः प्रसव्यं परिषिच्य पात्राण्युब्जं कृत्वा तृप्यत तृप्यत तृप्यत इति यजुरवानं त्र्यवरार्थं आवर्तयित्वा पिण्डान् सम्पूज्यापूपादिकं निवेदयेत् । प्रोक्षणपात्राणि द्वन्द्वमभ्युदाहृत्यापसव्येन प्राणे निविष्टोमृतं जुहोमि + ब्रह्माणि म आत्मामृतत्वायेति पिण्डशेषस्य ग्रासवरार्धं प्राश्नीयात् । एतन्मासि श्राद्धं प्रतिमासं कृष्णपक्षे धर्मशास्त्रोक्तकाले कुर्यात् ॥

रजस्वलाकर्तृकं पञ्चमेह्नि भर्त्रादिश्राद्धं त्रिपुरुषोद्देशेन सङ्कल्पविधानेन कुर्यात् । सापिण्डी-करणं तु यथोक्तप्रकारेणैव कुर्यात् । दर्शादिश्राद्धेषु भर्त्रादितात्पित्रादिषट्पुरुषोद्देशेन सङ्कल्पविधानेन कुर्यात् । पाकोपक्रमणानन्तरं रजस्वलायां ऋत्विगादिना तेन पाकेन श्राद्धं कारयेत् । कर्तुस्तु सङ्कल्पात्पूर्वं आशौचे प्राप्ते श्राद्धमुत्सृज्य सूतिकान्ते कुर्यात् । ब्राह्मणानां त्वाह्वानानन्तरं आशौचे ज्ञाते तानेव भोजयेत् । कर्तृभोक्त्रोरेकस्याशौचे ज्ञाते दोषः । आसनात्पूर्वं ज्ञाते तमुत्सृज्य पुनरन्यं निमन्त्र्य श्रोत्रियान्वेदपारगान् श्वित्रादिदोषवर्जितान् सुशीलान्सर्वकृत्येषु भोजयेत् ॥ ६० ॥

इति षष्टितमः खण्डः ॥

सूत्रभाष्यश्रुतिस्मृतिसंग्रहसामयाचारिकान् अवलोक्य लोकोपकाराय अग्निमुखप्रभृति उत्तरप्रायश्चित्तान्तं षष्टिखण्डैः स्मार्तप्रयोगसंग्रहो विरचितः ॥

॥ शुभमस्तु ॥

ओं तत्सद्ब्रह्मार्पणमस्तु ॥

यन्महद्भिः पापठ्यतां नमाम्यापस्तंबाचार्यमुनिम् ।
नमामि बोधायनगुरुं नमामि कपर्दिनं नमामि कपर्दिनम् ॥

इति वेङ्कलेसिङ्गयभट्टसूरिविरचितायां आपस्तम्बस्मार्तप्रयोगदीपिकायां उत्तरभागः ॥

ग्रन्थश्चायं संपूर्णः ॥